श्रीहरिः ।

विजयते श्रीबालकृष्णः प्रभुः ।

# ज्ञानभक्तितारतम्यविमर्शः ।

( श्रुत्यविरोधसाधनम् )




ग्रन्थकर्ता प्रकाशकश्च—

भक्तिमार्गाब्जमार्तण्ड-अखण्डभूमण्डलाचार्य जगद्गुरु श्रीवल्लभाचार्य
वंशावतंसविद्वन्मूर्धन्यगोस्वामिकुलकौस्तुभ-श्रीगोकुलनाथाचार्यात्मजः—

गोस्वामिश्रीदीक्षितः ।



शके १८८७


मूल्यं श्रीकृष्णभक्तिः ।

॥ श्रीहरिः ॥

# आपाततः परस्परविरुद्धश्रुतीनां विरोधपरिहारप्रकारः ।

## प्रथमो विभागः ।

### सामान्यतया आपाततः परस्परविरुद्धश्रुतीनां प्रदर्शनम् ।

| | |
|---|---|
| १ तमेवं विद्वान् अमृतइह-नान्यःपन्था— | १ नायमात्माप्रवचनेन—यमेवैषवृणुतेतेनलभ्यः- |
| २ तमेवविदित्वा अतिमृत्युमेति-नान्यःपन्था— | २ यस्य प्रसादात्परमार्तिरूपात् संसारान्मुच्यते नापरेण । |
| ३ ऋतेज्ञानान्न मुक्तिः— | |
| ४ ज्ञानादेव तु कैवल्यं.— | |
| ५ तन्त्वौपनिषदं पुरुषं.— | |
| ६ वेदान्तविज्ञानसुनिश्चितार्थाः— | |
| ७ सर्वे वेदा यत्पदमामनन्ति— | |
| ८ ऋचोअक्षरेपरमे.— | |

### सामान्यतयाश्रुत्यंशविरोधप्रदर्शनम् ।

## द्वितीयो विभागः ।

| | |
|---|---|
| १ तन्त्वौपनिषदंपुरुषं.— | १ नायमात्मा प्रवचनेन.— १-२-३-४-९-१०— |
| २ वेदान्तविज्ञानसुनिश्चितार्थाः— | २ यमेवैष वृणुते.— ५-६-७-८— |
| ३ तमेवं विद्वान्.— | |
| ४ तमेव विदित्वा.— | |
| ५ नान्यः पन्था.— | |
| ६ नान्यः पन्था.— | |
| ७ ऋते ज्ञानान्न मुक्तिः.— | |
| ८ ज्ञानादेव तु कैवल्यं.— | |
| ९ सर्वे वेदा यत्पद.— | |
| १० ऋचोअक्षरे.— | |

## विशेषतया श्रुत्यंशविरोधप्रदर्शनपूर्वकं परिहारप्रदर्शनम् ।

### तृतीयो विभागः ।

१ तन्त्वौपनिषदं पुरुषं—
२ वेदान्तविज्ञानसुनिश्चितार्थाः—
३ सर्वे वेदा यत्पदमामनन्ति.—
४ ऋचोअक्षरेपरमे.—

१ नायमात्मा प्रवचनेनेत्यत्र प्रवचनपदार्थस्य अभिधया ग्रहणे ।

नायमात्मेत्यत्र प्रवचनपदार्थस्य मुख्यवृत्त्या ग्रहणे प्रवचनपदं वेदवाचकं भवति एवं चानया श्रुत्या ब्रह्मणो वेदोपनिषदाद्यलभ्यत्वं सिद्ध्यति तन्त्वौपनिषदमित्यादिभिः श्रुतिभिः ब्रह्मणो वेदादिलभ्यत्वमुपलभ्यते इत्येवं विरोध उपस्थितो भवति—

अत्र विरोधपरिहारस्त्वित्थं तन्त्वौपनिषदं–वेदान्तविज्ञानेत्यादिश्रुतिभिः ब्रह्मणः परोक्षज्ञानविषयता उच्यते करणाकांक्षा च पूर्यते । नचवेदान्तविज्ञानेति श्रुतौ वेदान्तविज्ञानसुनिश्चितेतिभागेन परोक्षज्ञानविषयतोच्यते इति कथनं न साधु, सूपसर्गस्वारस्येन अपरोक्षरूपेण ज्ञेयतैवोच्यते इति वाच्यम्–वेदान्तवाक्यार्थज्ञानस्य सामान्यरूपतां व्यावर्तयितुम् विउपसर्गस्यसार्थक्यम् एवं च विउपसर्गेण करणज्ञानस्य विशेषरूपतोक्तिः । कर्मसम्बन्धिपरोक्षनिश्चयात्मकज्ञानस्यापि सामान्यरूपतां अपसारयितुम् सूपसर्गस्य सार्थक्यम् अतोत्र विशेषरूपतया परोक्षज्ञानमेवोच्यते नापरोक्षज्ञानम् । अन्यथा अग्रे सन्यासयोगादिति कथनं न सङ्गच्छेत । सन्यासयोगादित्यत्र त्यागपूर्वकं शमदमादिसाधनसम्पत्तिः ज्ञानमार्गीयसाधनकोटिनिविष्टा उच्यते तया सत्वं शुद्धं विधाय ये यतयः ते अपरोक्षं ज्ञानं प्राप्य परिमुच्यन्ति इत्येवमर्थो ज्ञेयः । एतत् भागसार्थक्यम् अस्मत्प्रदर्शितरीत्यैवार्थकरणे सुरक्षितं तिष्ठति । वेदान्तेति भागेनैव अपरोक्षज्ञानलाभे अग्रे इयतीसाधनचर्चैवव्यर्था भवेत् । अपरोक्षतया ब्रह्मदर्शने भिद्यते हृदयग्रन्थिरिति वचनेन मुक्तिरेव कथनीया भवेत् कोऽवकाशः साधनचर्चायाः । नायमात्मेत्यनेन अपरोक्षतया ज्ञेयताप्राप्यता च प्रतिषिध्यते एवं चात्र न विरोधाऽवकाशः विषयभेदात् । तन्त्वौपनिषदं इत्यादिभिः श्रुतिभिः परोक्षरूपेण ज्ञेयतोच्यते नायमात्मेत्यनेन अपरोक्षरूपेण दृश्यता प्रतिषिध्यतेति स्पष्टो विषयभेदः । यद्वा लोकवेदप्रथितकृष्णनारायणयोः परोक्षज्ञाने वेदान्तानां तदुपबृंहकगीतादेरेव साधनत्वं लोकवेदप्रथितकृष्णनारायणयोः अपरोक्षदर्शने अङ्गीकारेतरवेदान्तादिसाधनानां अकिंचित्करत्वम्, लोकवेदातीतस्य परोक्षापरोक्षोभयरूपेणापिदर्शने अङ्गीकारेतरवेदान्तादितज्ज्ञानादिसाधनानां च असाधनत्वम् इति निरूपणार्थम् । तन्त्वौपनिषदं.–नायमात्मेत्यादि ॥

^ तज्जन्यभक्तिमर्यादाभक्ती -

## श्रुत्यंशविरोधप्रदर्शनपूर्वकं परिहारप्रदर्शनम् ।

### चतुर्थो विभागः ।

१ तमेवं विद्वान्— नायमात्मा प्रवचनेनेत्यत्र
२ तमेव विदित्वा— प्रवचनपदार्थस्य तात्पर्य-
३ ऋतेज्ञानात्— वृत्त्याग्रहणे ।

नायमात्मेत्यत्र प्रवचनपदं वाच्यतासम्बन्धेन तदुक्तसाधनान्युपलक्षयतीति वेदवाच्ययावत्साधनोपलक्षकं भवति तथा च तमेवेत्यादिश्रुतिप्रतिपाद्यत्वात् ब्रह्मज्ञानस्यापि वेदवाच्यसाधनत्वमक्षुण्णं सिद्ध्यति एवं च नायमात्मेत्यादिश्रुत्या ब्रह्मणः वेदवाच्यज्ञानादिसाधनालभ्यत्वं सिद्ध्यति तमेवेत्यादिभिः वेदवाच्यज्ञानसाधनलभ्यत्वं आयातीति उपस्थितेविरोधे—

विरोधपरिहारस्त्वित्थं यत् अत्र तमेवम्–तमेव–नायमात्मेत्यादि श्रुतिभिः अधिकारिभेदेन पुरुषोत्तमनारायणाक्षरलाभदृष्ट्या एकस्य ज्ञानसाधनलभ्यता अन्यतरयोः— अङ्गीकारतज्जन्यभक्तीतरसाधनालभ्यता उच्यते । नायमात्मेत्यत्र पुरुषोत्तमनारायणयोः अङ्गीकारतज्जन्यभक्तीतरसाधनालभ्यता, तमेवमित्यादिषु अक्षरस्य ज्ञानसाधनलभ्यता प्रतिपाद्यते । न च तमेवमित्यत्र पूर्वप्रकृतनारायणस्यैवपरामृष्टत्वं उचितम्, तत्रानेकश्रुतिलिङ्गादिभिः नारायणस्यैव प्रतिपाद्यत्वात् अतः कथं तमेवमित्यादिषु तच्छब्देनाक्षरः परामृश्यते येनाधिकारिभेदेनसमाधानमुपपन्नं भवेत् इतिवाच्यम् पुरुषसूक्तेप्राधान्येननारायणस्यैव प्रतिपाद्यत्वमङ्गीकुर्वन्तोपि वयं अप्रधानतया अक्षरस्यापि प्रतिपादनमस्तीतिराजासौगच्छतीत्यत्र सपरिवारस्यगमनवत् मन्यामहे अतः तमेवमित्यत्रतच्छब्देनाक्षरस्यपरामर्शोपि सर्वथा उपपन्नतरः सम्भवदुक्तिकश्चेति नानुपपत्तिलेशोपि । अथवातमेव तमेवमित्यत्र नारायणात्मकब्रह्मणःपरोक्षज्ञानंपरम्परया मुक्तिसाधनंतच्चापि कीदृशंमुक्तिसाधनमित्युच्यते । परंपरया मुक्तिसाधकपरोक्षज्ञाने इतरप्रकारकत्व इतरविषयकत्वनिषेधपूर्वकं विषयप्रकारनिश्चयः तमेवतमेवमितिश्रुतिभ्यां क्रियते । तमेवंतमेवेत्युभयोः श्रुत्योरक्षरपरत्वे तु अपरोक्षज्ञानेन ज्ञानमार्गीया मुक्तिरत्रोक्तेति ज्ञेयम् । एवं च नान्येति निषेधेन ज्ञानमार्गीयमुक्तेः ज्ञानातिरिक्तसाधनकत्वनिरासः अत्रोक्तः । नायमात्मेत्यत्र अङ्गीकारेतरसाधनैः नारायणस्य अपरोक्षरूपेण ज्ञेयता प्राप्यता च निरस्यतेत्यस्यापि समाधानस्यावकाशः । नायमित्यत्र अक्षरस्य तु चर्चापि नास्तीति विरोधाभावात् समाहितिरप्यप्रसक्ता । ननूक्तसमाधानद्वये अप्रधानतया अक्षरस्य परामृष्टत्वे परंपरया मुक्तिसाधकपरोक्षज्ञानस्य विवक्षितत्वे च किं बीजमिति चेत् श्रुणु पुरुषसूक्ते प्रतिपादिता जगत्कारणतैव अक्षरपरामर्शे बीजं परोक्षाऽपरोक्षज्ञानस्य विवक्षितत्वे च लभ्यपदविवृणुते पदादिस्वारस्यमेव बीजम् । ऋते ज्ञानादित्यस्यास्तु अक्षरविषयकज्ञान्यधिकारकत्वमेवाङ्गीकार्यम् । ज्ञानादेव तु इत्यत्र कैवल्यपदस्वारस्येन प्रकृतिविविक्तात्मज्ञानेनैव प्रकृतिविविक्तात्मस्थितिरेव जीवात्मनः कैवल्यपदेनोच्यते नमुक्तिरुक्तेति बोध्यम् । अत एवास्याःश्रुतेः अस्मिन् विभागे अनिर्देशः ।

भक्तिमर्यादा
भक्तिमर्यादा

## विशेषतयाश्रुत्यंशविरोधप्रदर्शनपूर्वकं परिहारप्रदर्शनम् ।

## पंचमो विभागः ।

| | |
|---|---|
| १ तमेवंविद्वान् इत्यत्र—<br>तत्पदार्थस्यनारायण—<br>परतया ॥ | तमेवविदित्वेत्यत्र-<br>तत्पदार्थस्य-<br>शिवपरतया ॥ |

२ नान्यः पन्थेति उभयत्रापि—
उक्तिरित्यतोपि ॥

श्वेताश्वतरीयतमेवेत्यादिवाक्येपूर्वप्रकृतत्वंशिवस्येति अत्रनान्यः पन्थेतिवाक्यशेषेणशिवज्ञानमेवमुक्तिसाधनमितिप्रतीयते, तमेवमित्यत्रापि नान्यः पन्थेतिवाक्यशेषेण पूर्वप्रकृतनारायणज्ञानमेवमुक्तिसाधनमितिप्रतिपाद्यते। एवमुभयत्र भिन्नभिन्नज्ञानयोः मुक्तिसाधनत्वमुच्यमानंविरुद्धयते। यद्युभयत्रनान्यः पन्थेति निषेधोनश्रूयेत तदातु उभयस्वरूपज्ञानयोः उच्यमाना मुक्तिसाधनतानविरुद्ध्येत उभयस्वरूपज्ञानयोः मुक्तिसाधनत्वमेव तेनलब्धं स्यात्, एवंचोभयस्वरूपज्ञानसमुच्चयः विकल्पोवाबोध्येत। किन्तूभयत्रनान्यपन्थेतिनिषेधोविरोधमुपस्थापयति, निषेधश्रवणेनभवति सन्देहः शिवज्ञानंमुक्तिसाधनं नारायणज्ञानंवा एवंविरोधसन्देहाद्युपस्थितौसन्देहविरोधपरिहारायकिंकार्यम् किंपुरुषसूक्तस्यरुद्रपरत्वंकल्पनीयम् उतश्वेताश्वतरस्यनारायणपरत्वं कल्पनीयम् १ उभयत्रप्रतीतश्रुतिलिङ्गादिषु नारायणपरत्वसाधकानां श्रुतिलिङ्गादीनां प्राबल्यमभ्युपेयम् शिवपरत्वसाधकानां वा २ श्वेताश्वतरस्थशिवशब्दस्ययोदेवानां नामधा एकएवेति ऋचोक्तनिर्णयानुसारेणनारायणवाचकत्वमङ्गीकार्यम् अथवाएतन्निर्णयं समुपेक्ष्य रुद्रवाचकत्वं स्वीकार्यम् ३ योदेवानां नामधाएकेति श्रुतेः विश्वकर्मश्रुत्यनुरोधेन विश्वकर्मादेवतापरत्वं यद्वाएतत्सूक्तस्थअजस्यनाभावितिश्रुतिसिद्धपद्मनाभत्वलिङ्गानुरोधेन नारायणपरत्वं संरक्षणीयम्—४ शिवशब्दस्यरूढ्यारुद्रपरत्वमिष्यतेकल्याणस्वरूपमात्रवाचकत्वं वा ५ रुद्रशब्दस्यरूढ्याअर्थः परिगृह्यते योगेनवा ६ रूढिरपिलौकिकीग्राह्यावैदिकीविद्वद्रूढिर्वा ७ अतीन्द्रियपदार्थेलौकिकीरूढिः प्रबला वैदिकीविद्वद्रूढिर्वा ८ तमेवं तमेवेत्यत्र तच्छब्दस्य पूर्वप्रकृतपरामर्शित्वाङ्गीकारेण मुख्यार्थपरत्वं अमुख्यार्थपरत्वं वा ९ नान्यः पन्थेत्यत्र शैववैष्णवाधिकारिभेदेन व्यवस्थाविधेया अथवा उभयोरपि निषेधयोः सर्वाधिकारिपरत्वं अभ्युपेयम् १० इत्याद्यनेकप्रश्नोपस्थितिरत्र भवति। सर्वश्रुत्यनुगतत्वात् सर्वरेखासम्बद्धमध्यबिन्दुवत् पुरुषसूक्तस्यस्वाभाविकं प्राबल्यमुपायशतेनापिअपह्नोतुमशक्यं, एवंचप्रबलसूक्तवाक्यमनुरुध्यैवश्वेताश्वतरीयतमेवविदित्वेत्यत्रतच्छब्दस्यार्थोविधेयः नतुश्वेताश्वतरानुरोधेन पुरुषसूक्तस्य रुद्रपरत्वंअभ्युपगमनीयं। निरवकाशतयाप्रबलपद्मनाभत्वलिङ्गबाधिताविश्वकर्मश्रुतिः विश्वकर्मसूक्तस्य विश्वकर्मपरत्वसाधने असमर्थेतिसूक्तस्य नारायणपरत्वं प्रबलप्रमा-

सिद्धम् अतःयोदेवानां इत्यत्र यच्छब्दार्थोपिनारायणएवसिद्धः। यच्छब्दस्य नारायणपरत्वे सिद्धे योदेवानांइति सिद्धनिर्णयेनैव शिवरुद्रादिशब्दानांविद्वद्रूढ्यानारायणवाचकत्वमेव सिद्ध्यतीतित्र्यक्षनीलकण्ठवाचकत्वकल्पनापि अनुपपत्तिग्रस्तैव। अतीन्द्रियविषयेतुविद्वद्रूढेरेव प्राबल्यं, लोकव्यवहारायोग्यत्वात्। विद्वद्रूढिसमाश्रयणेतु यौगिकार्थस्यानवसरपराहतत्वमेव। एकोहवै नारायणआसीदितिनिराकांक्षश्रुत्युपोद्बलितानां नारायणपरत्वसाधकश्रुतिलिङ्गादीनां एवंप्राबल्यस्य सर्वथास्वाभाविकतयाशिवपरत्वसाधकानां तेषां दौर्बल्यंव्यक्तमेव। मुख्यार्थबाधविरहेण अमुख्यार्थपरिग्रहे प्रमाणलेशाभावात् अमुख्यार्थपरिग्रहोपिनयुक्तः। किंचअमुख्यार्थपरिग्रहे शिवपरत्वम् अपि न भवेत्। अतोस्यप्रश्नस्यावकाशाभावात् उभयत्रापि तच्छब्दार्थस्य नारायणपरत्वमेवसिद्धमिति विरोधलेशोपिनास्ति ॥



## विशेषतयाश्रुत्यंशविरोधप्रदर्शनपूर्वकं परिहारप्रदर्शनम् ।

## षष्ठो विभागः ।

पु. सू.

१ नान्यः पन्था— १ यमेवैषवृणुतेतेन लभ्यः अस्याश्रुतेः-सावधारणवाक्यतया ।

श्वे. तर ।

२ नान्यः पन्था २ नापरेणेतिश्रुतेरपि ।

३ ऋतेज्ञानात्—

४ ज्ञानादेव तुकैवल्यं—

तुरीयविभागवत् षष्ठे विभागेपि पुष्टिमर्यादाअधिकारिभेदेन ( ज्ञानमार्गीयपुष्टि-भक्तिमार्गीयअधिकारिभेदेन ) समाहितिरिति अभियुक्तोक्तः पन्था । यद्यपिक्वते अभियुक्ताः क्वाहं वराकः तथापि=अहंत्वेतद् बाल्यं यदिह कृतवानस्मि तदपि अहेतु-स्नेहानां किमपि कुतुकायैवमहताम्=इतिश्रीमधुसूदनसरस्वत्युक्त्यनुसारेण किंचित् बाल्यमभिव्यनज्मि । मन्मतेनतु=तमेवं तमेवेतिश्रुत्योः कर्मभक्त्यात्मकज्ञानेतरसाधन-निषेधपूर्वकं मुक्तेः ज्ञानसाधनमात्रलभ्यता प्रतिपादने तात्पर्यमेवनास्ति । एतच्छ्रुतिद्वय-प्रतिपादितप्रकारविषयातिरिक्तप्रकारविषयकज्ञाननिषेधपरत्वमेवनान्यः पन्थेति निषे-धयोः । तथाहि पुरुषसूक्तस्थतमेवमितिवाक्ये तच्छब्दसमभिव्याहृतेन एवम्-पदेन पूर्वोपक्रान्तः प्रकार एव बोध्यते । तथाच तमेवं विद्वान् इत्यस्य–तं–एवं–पूर्व-प्रकृतं नारायणं पूर्ववर्णितप्रकारेण विद्वान् इत्यर्थौ निष्पन्नः एवंच नान्यः पन्था इत्यनेन प्राग्वर्णितप्रकारातिरिक्तप्रकारकज्ञाननिषेधएवलभ्यते नकर्मभक्त्यादिसाधन ( मार्ग )-निषेधः । एवमेवास्य वाक्यस्य पूर्वापरभागैकवाक्यता सुरक्षिता तिष्ठति । श्वेताश्वतरीय-तमेवेति वाक्ये–तं–पूर्वप्रकृतं नारायणं तदभिन्नं अक्षरं वा एव विज्ञाय नतु प्रकृतिविवि-क्तात्मज्ञानादिना मुक्तिः सम्भवति इत्येवं मुक्तिसाधनज्ञाने विषयनियमः अन्यविषय-व्यवच्छेदपूर्वकं प्रदर्श्यते । एवं चात्र नान्यःपन्थेतिनिषेधेन इतरविषयकज्ञानव्यव-च्छेद एव अभ्यासरूपेण क्रियते ॥ न चैवं पन्थापदस्वारस्यमपह्नूयत इति वाच्यम् अत्रोक्तविषयेतरविषयकज्ञानव्यवच्छेदे एवपूर्वापरभागसम्बद्धतया पन्थापदस्वारस्यं संरक्ष्यते । अन्यथा वाक्यभेदो पूर्वापरभागासम्बद्धतावा भवेत् तयाच अप्रामाण्य-प्रसक्तिरेव स्यात् । स्वरसलब्धमर्थमुपेक्ष्यनिरर्थकवाक्यभेदोपस्थापने व्याख्यानस्य सावद्यत्वमेव भवेत् । वाक्यभेदानङ्गीकारे असम्बद्धार्थनिरूपकतया जरद्गववाक्यतुल्य-

तैवस्यादितिवृद्धिमिच्छतोमूलहानिरेव शिरसि शिरसि आपतेदितिविभावनीयम् । ननुतर्हि गतेरर्थवत्वमितिसूत्रे अभियुक्तैः अनयोःश्रुत्योः मार्गपरत्वेनाशयः कथमुच्यते इतिचेत् प्रौढ्यावादिपक्षमभ्युपेत्य अभ्युपगमवादेनतथोक्तिरितिजानीहि । यद्यप्येतच्छब्दतोनस्फुटं तथापिसर्ववाक्यैकवाक्यतां आग्रहेणसंरक्षतां अभियुक्तानां अयं नवीनः प्रयासः सर्वथासम्मतः इत्यपियथावसरंप्रकाशयिष्यामः । तमेवमित्यत्र ज्ञानमार्गीयाग्रहशीलपक्षं अद्वैतिपक्षंचअभ्युपेत्य गतेरर्थवत्वमितिसूत्रभाष्ये भावप्रकाशिकायांप्रकाशेचनिरस्तं सर्वनिर्णये शैवपक्षमभ्युपेत्यतमेवेतिश्रुतिव्याख्यानेपरिहृतम् । वस्तुतस्तु नात्रमयाकिंचिन्नवीनमुट्टंकितम्, किन्तुतेषामेवहार्दमतंमयात्रविवृतमितिज्ञेयम् ॥



## तमेवमितिश्रुतेः नायमात्मेतिश्रुतेश्च विरोधपरिहारप्रकारः। गतेरर्थवत्वमितिसूत्रभाष्येप्रकाशेच ।

### सप्तमो विभागः ।

सत्यंज्ञानमनन्तमितिश्रुत्यातमेवमितिश्रुत्याच उक्तस्वरूपब्रह्मज्ञानेनैवमोक्षइतिप्रदर्श्य यमेवैषइतिश्रुत्या भगवदीयत्वेनाङ्गीकारात्मकवरणस्य भक्तिमार्गीयतां उक्त्वावरणानन्तरं भक्त्यैवमोक्ष इत्येवमनयोः श्रुत्योः विरोधप्रदर्शनंभाष्येकृतम् । तदग्रेचभक्त्यामामिति वचनमुपस्थाप्यतत्वतोज्ञात्वाविशतेइत्युत्तरार्धतात्पर्यविवरणपूर्वकंभक्तिमार्गेपिज्ञानेनमोक्षः किन्तुपुरुषोत्तमज्ञानेन ज्ञानमार्गेतु अक्षरज्ञानेनेति विशेषोनिरूपितः। तस्मान्मद्भक्तियुक्तस्येतिवाक्यमुपन्यस्य ज्ञाननैरपेक्ष्यमप्युक्तम्। भक्तस्यज्ञाननैरपेक्ष्योक्तिस्तु स्तुत्यभिप्राया ज्ञानेनैवमोक्षइतिनिरूप्य पुरुषोत्तमाक्षरज्ञानयोःविषयभेदात् कतमज्ज्ञानस्यमुक्तिसाधनत्वंइत्यनिर्णयइतिनिरूप्यएवमपिकथनं नसाधुरेतदुक्तम् । तर्हिज्ञानसमुच्चयोऽङ्गीकार्यः उभयस्यापिश्रौतत्वस्याऽविशिष्टत्वात् इतिपूर्वपक्षरूपेणोक्त्वा फलभेदात्साधनभेदएवाभ्युपेयः नसमुच्चय इत्युत्तरितम् । एवंचविलीनोविरोधः अधिकारिभेदेनैवसर्वमुपपन्नं इतिअधिकरणवैयर्थ्यमाशंक्य पूर्वंज्ञानमार्गेप्रवृत्तस्य पश्चात्भक्तिमार्गप्रवेशेलयस्थानानिर्धार इत्यस्यात्रदूषणत्वोक्तिः। मत्कामारमणंजारं मत्स्वरूपाविदोऽबलाः। ब्रह्ममांपरमंप्रापुरितिवाक्यात् ज्ञानरहितानामपिमुक्तिकथनात् ज्ञानसाधनत्वनिरूपकश्रुतिविरोधो पुनरायातीतिप्रतिपादितम् । एवमपिमिथःश्रुत्योः स्मृत्योश्चविरोध इतिक्वचिद्ज्ञानं क्वचिद्भक्तिक्वचिन्नोभयमपि इतिएकतरसाधननिर्धारासंभवात् मुमुक्षोः साधनेप्रवृत्त्यसंभव इतिपूर्वपक्षेप्राप्ते सिद्धान्तितम् । गतेरर्थवत्वमिति ॥ भाष्ये । प्रकाशेतुसूत्रावतरणेपूर्वाधिकरणे ज्ञानापेक्षयाभक्तेः ज्ञान्यपेक्षयाभक्तस्योत्कर्षश्चकथितः तस्योत्कर्षकथनस्यहेतुबोधनेन दृढीकरणार्थमिदमधिकरणमारभ्यते इत्येवमेतदधिकरणं अवतारितम् ॥ तदनन्तरंतमेवमिति वाक्यमुपन्यस्यएतद्वाक्यतात्पर्यकथनप्रसङ्गे वेदाहमेतंपुरुषंइति पूर्वार्धवाक्यं निर्दिश्यएतद्वाक्यार्थप्रकाशनंकृतम् ॥ तत्रएतमित्यस्यार्थस्तु पूर्वमन्त्रेजगत्कर्तृतयाउक्तम् इतिकृतः । तदनन्तरं अहंवेदेत्यंशेनस्वस्यज्ञातृत्वमुक्तम् । ब्रह्मस्वरूपंच तमसः परस्तादित्यनेन अज्ञानात्परंउक्तम् आदित्यवर्णमित्यनेनचश्यामावदातवर्णविशिष्टत्वमुक्तम् । एवंचैतादृशश्रुतिभिः सत्यादिलक्षणकजगत्कर्तृत्वादिविशिष्टब्रह्मस्वरूपज्ञानेन मोक्षउच्यते। यमेवेतिश्रुतौतत्रोक्तप्रकारेणभक्त्यैवब्रह्मलाभात्मकोमोक्षउक्तः। एवंचात्रमोक्षार्थंज्ञानभक्तिसमुच्चयः आवश्यकः विकल्पोवाइत्येवंभवतिसंशयः। भक्त्या मामभिजानातीतिवाक्येन गीतायांमुक्तिकारणतापुरुषोत्तमज्ञानस्यप्रदर्शिता ब्रह्मविदाप्नोति इतिआनन्दवल्लीश्रुत्या अक्षरज्ञानंमुक्तिकारणतयोक्तमतोस्वापवर्गार्थे भक्तेनतेसमुच्चेये विकल्पनीयेवा इतिद्वितीयः संशयः। विकल्पेदोषाष्टकमायातीति समुच्चयएवसाधिति उक्तिः। तस्मान्मद्भक्तियुक्तस्येतिवचनमुपस्थाप्य भक्तस्यज्ञानापेक्षानास्तीतिकथनेनसमुच्च-

यानावश्यकताप्रदर्शनम् । एवंप्रथमेकल्पे तमेवंयमेवेतिश्रुत्योः द्वितीयेकल्पे भक्त्यामामभिजानातीति स्मृतिवचनस्य तस्मान्मद्भक्तियुक्तस्येतिस्मृतिवचनस्यच विरुद्धताप्रतीत्यासमुच्चयविकल्पयोरेकतरानिर्धारात् वाक्यानामबोधकताप्रसक्तिः । तमेवमितिश्रुतौभक्त्या मामभिजानातीतिस्मृतौच ज्ञानस्यमुक्तिहेतुतोक्तेः तत्त्वतोज्ञानंभक्त्यैवभवतीति साधनान्तरसाधितंज्ञानं अतात्त्विकतयानमुक्तिसाधनं इत्येवंज्ञानस्यतात्त्विकता मुक्तिसाधकताच भक्त्यैव भवतीति भक्तिस्तुतावेवतस्मान्मद्भक्तियुक्तस्येतिवचनतात्पर्यं तस्मात् ज्ञानेनैव मुक्तिर्भवतीत्येवाभ्युपेयं नभक्तिसमुच्चयशंकापिकार्याइत्युक्तम्॥ वस्तुतस्तु नायंपक्षः साधुः अनेकवचनविरोधात् तथापि तुष्यत्विति न्यायेनाभ्युपेत्यखण्ड्यते–एवंभक्तित्यागेपीति–श्रुतौस्मृतौउभयत्रापिज्ञानस्यमोक्षहेतुत्वकथनात् नज्ञानंनचवैराग्यं इतिवचनस्यभक्तिस्तुतौतात्पर्यं अतोन भक्तिसमुच्चयशंकाऽपितुज्ञानेनैवमुक्तिःसंभवति इत्येवंभक्तित्यागेन सर्वविरुद्धवचनाऽविरोधसंपादनदुरायासे उपक्रान्तेपि नसर्वथासाफल्यमनुभवत्ययंपक्षः। ब्रह्मविदित्यत्र अक्षरज्ञानं मुक्तिसाधनंदृश्यते तमेवमित्यत्र उत्तमपुरुषज्ञानम्, अतःकतमज्ज्ञानं मुक्तिसाधनं इत्येवंविचिकित्सापिशाचीकरालदंष्ट्रां प्रदर्शयन्ती पुनरुपतिष्ठतीत्युच्यते मुक्तिसाधकज्ञानविकल्पस्य दुर्वारत्वात् इति । श्रुतिप्रतिपादितत्वमुभयज्ञाने अविशिष्टं तस्मात् ज्ञानसमुच्चय एवाभ्युपेयः इति पुनराशंक्य निरस्यते, स्थानभेदेन फलभेदप्रतिपादनात् उभयज्ञानसमुच्चयोऽपि नवक्तुं शक्य इत्येवंरीत्या । पुनरपि फलभेदः अधिकारिभेदमनुमापयति अधिकारिभेदेनच सर्वश्रौतस्मार्तवचनाविरोधः सन्देहादिसकलदोषनिवृत्तिः सर्वेषां श्रुतिस्मृतिवचनानां सर्वथोपपन्नताभवतीतिव्यर्थमेवगतेरर्थवत्वमित्यधिकरणं इति पूर्वपक्षमुपन्यस्य पूर्वं ज्ञानमार्गीयज्ञानं पूर्णतया प्राप्तवतः पश्चात् भक्तिमार्गीयज्ञानप्राप्तौ यं यं वापि स्मरन् भावं इति भगवद्वचनेन पूर्वज्ञानस्य नैरर्थक्यमेवसिद्धं, अतः तत्र फलभेदकथनमसंभावितमिति तादृशस्याधिकारिणः–तमाहुः परमांगतिं–यं प्राप्यननिवर्तन्तेत्यादिवचनैः अक्षरे लयोङ्गीकार्यः उत यंयंवापीति वचनेन पुरुषोत्तमे लयोभ्युपेयः–एवंलयस्थाननिर्धारासंभवात् प्राप्ते संशये अधिकरणरचनावश्यकीत्युत्तरितम् । अपरंचयथा भक्तितः पुरुषोत्तमज्ञानं भवति तथा अक्षरज्ञानेनापि भवति इति कयाचिद्विधयाऽत्यद्यधिकरणरचनासमर्थ्यते तदा तु ततो मां इत्याद्युक्तरीत्याभगवज्ज्ञानस्यैवप्रवेशसाधनता अस्मिन्नधिकरणे निर्णीयते इत्येव वक्तव्यम् । तथाच तमेवेति श्रुतेः सावधारणत्ववत्–मत्कामा रमणं जारं मत्स्वरूपाऽविदोऽबलाः । ब्रह्ममां परमं प्रापुः सङ्गाच्छतसहस्रशः–इति कथनेन तदुपबृंहितायाः वरणश्रुतेरपि सावधारणतुल्यत्वेन सर्वं वाक्यंसावधारणमिति न्यायेनापि वरणश्रुतेरपि सावधारणतया मार्गद्वयज्ञानरहितानामपि भगवत्प्राप्तेः भगवद्वचनेनैवसिद्धिरित्यतो ज्ञानसाधनत्वनिरूपकश्रुतिविरोधः प्राप्नोतीति पुनरपि संदेहोपस्थितौ संशयनिराकरणार्थमिदमधिकरणमारभ्यतेति अधिकरणावश्यकता सुस्थिरैव । अतः पूर्वोक्तौ विषयसंशयौ च निर्बाधौ । तथाच क्वचिदित्यादि भाष्योक्तरीत्या मुमुक्षुप्रवृत्त्यसंभवे पुनः प्राप्ते पूर्वोक्तं ज्ञानभक्त्योस्तारतम्यं भक्त्युत्कर्षो दोषस्य कादाचित्कतानिर्णेतुमशक्येति पूर्वपक्षे प्राप्ते सिद्धान्तप्रदर्शनमुखेन पूर्वोक्तं ज्ञानभक्त्योस्तारतम्यं भक्त्युत्कर्षं च द्रढयितुं

ज्ञानोत्कर्षप्रतिपादनतात्पर्यमाह इति भाष्यस्थाहशब्दाशयो प्रकाशेविवृतः । बुद्ध्यारूढता अत्रायमित्यादिना क्रियते । सर्वदा सर्वथानित्यायारीश्वरेच्छाया कार्यमात्रं प्रतिकारणत्वात् यमेवोन्निनीषतीति श्रुतिसिद्धेच्छापि जीवोन्निनीषाकारणीभूता सर्वथा नित्येत्यतः सृष्टिपूर्वकाल एव भगवान् यस्य यस्य जीवस्य यथा यथा विचारितवान् तत्तथैव भवति अतः भगवद्विचारशरीरप्रविष्टोन्नयनकारणविमर्शे उपस्थिते पूर्वोदाहृतवाक्यान्येव विमर्शपरिधिं प्रविशेयुः । पूर्वोदाहृतवाक्यविमर्शेतु ज्ञानभक्तिवरणभगवद्विषयककाम-रमणजारादिबुद्धीनां शास्त्रेमुक्तिसाधनताया दर्शनात् मुक्तिसाधनाननुगमे सति मुमुक्षु-प्रवृत्त्युपरोधात् मुक्तिकथापह्नवो माभूदिति मुमुक्षुप्रवृत्तिसिद्धये मुक्तिसाधनाननुगमेहेतुः शास्त्रद्वारा अवश्यमेव वक्तव्यः । सर्वसाधारणहेतुना कार्यसिद्धौ मर्यादापदप्रयोगः लोके दृश्यते यथा एतावतिकृते एतावद्दीयते इतिराज्यमर्यादा । शास्त्रेपि स्वकृतसेतुपरीप्सयाइति, सेतुः मर्यादा । तद्रहितानां ज्ञानभक्तिरहितानां इत्याद्युक्तात् पुष्टिरिति यावत् । पोषणं तदनुग्रह इतिवाक्यात् । अनुग्रहश्चधर्मान्तरमेव नफलदित्सा, यस्यानुग्रहमिच्छामीति-वाक्यात् । कृपानुकम्पादिशब्दवाच्यत्वमप्यस्यैव । एवंसतिलोकवत्तु लीलेतिन्यायेन यं जीवं यस्मिन्मार्गेङ्गीकृतवान् तंतत्र प्रवर्तयित्वा तन्मार्गीयं फलं ददातीति फलदानरीतिः । अनयारीत्यैवददाति एवंचात्रापि उदितानुदितहोमिवद् व्यवस्था अतोऽधिकारिभेदात् सर्वंव्यवस्थितं भवतीतिसर्वं सुस्थम् । केवलमर्यादायां योवृतः तस्याक्षरे लयःभवति । पूर्वंयो ज्ञानमार्गीयः तन्मार्गेणैवप्राप्तज्ञानः पश्चात् भक्तिमार्गे प्रविश्य भक्तिमार्गेण प्राप्तपुरुषोत्तमज्ञानः तस्यतु क्रमेण मर्यादायां पुष्टौ चाङ्गीकारः अतःतस्य प्रागक्षरेलयः ततउद्धृत्यपश्चात् पुरुषोत्तमेलयः ( प्रवेशः ) तेतु ब्रह्महृदं नीता इतिवाक्यात् एतत् सुखेनोपपद्यतेति श्रुतिद्वयोक्तमुपपन्नम् । एवंसाधितेसमन्वयेस्मृतिद्वयस्याप्युपपत्तिः इति–अतएव पुष्टिमार्गेतिपंक्त्या भाष्येउक्तम् । अन्यथाहिविरोधः–इत्यंशंव्याकुर्वन्ति–ननुसूत्रेकोवेतिः । विवरणपूर्वकं विपक्षेबाधकं विरोधमुद्घाटयन्ति=अत्रेदंबोध्यमिति । ब्रह्मनिरूपकवेदान्तवाक्येपुक्वचित् सृष्टिकर्तृत्वप्रशासितृत्वादिरूपं ब्रह्ममाहात्म्यं जीवात्मनः परमात्माऽभेदं चोक्त्वा तादृशसृष्टिकर्तृत्वादिधर्मविशिष्टजीवाभिन्नपरमात्मज्ञानं मुक्ति-साधनतयोक्तम् । क्वचिच्चवरणेन स्वस्वरूपप्रदर्शनम् । क्वचिच्चभक्त्यैव मुक्तिरुच्यते तत्र प्रकरणभेदात्माहात्म्यज्ञानवतात्माऽभेदज्ञानेनाऽक्षरप्राप्तिर्भवति ॥ यदातुवरणेनभगवत्स्व-रूपदर्शनं तदातु भगवत्स्वरूपेदृष्टिगोचरेसतिहृदयग्रन्थिभेदात् सुदृढस्नेहरूपभक्तिलाभेन पुरुषोत्तमप्राप्तिर्भवतिसायुज्यरूपा–लीलानुभवरूपावा । एवंचअक्षरेलयात्पूर्वंयदिवरण-सम्पत्तिः तदातुअक्षरज्ञानमपिधामात्मकभक्तोपास्याऽक्षरसाक्षात्कारसम्पादकतया पुरुषो-त्तमस्याऽक्षरप्रतिष्ठितत्वज्ञापकतयाच भक्त्यंशज्ञानमुपकरोतीति अत्रापिपूर्वजाताक्षरज्ञान-चारितार्थ्यम् । यदातु अक्षरेप्राग्लयः पश्चात् वरणेनतत उद्धारः तदनु भक्त्यापुरुषो-त्तमाऽपरोक्षसाक्षात्कारेण यथाधिकारं पुरुषोत्तमे प्रवेशः लीलानुभवो वा अस्मिन् पक्षेऽपि प्राक्सम्पन्नमक्षरज्ञानं अक्षरेलयं सम्पाद्य चरितार्थमिति नकस्यापिवैय्यर्थ्यम् । किन्त्वेवमुभयत्रापि पुरुषोत्तमप्राप्तिस्तु वरणेन वरणजनितभक्त्यैववाभवति । वरणंकेवल-

ज्ञाने उपसंहर्तुमशक्यम् विद्याधर्मत्वाभावात् । तथाहिवरणश्रुतौजीवकृतसकलसाधनालभ्यतायाविवक्षिततया परमात्मनः श्रवणादि विध्युक्तसाधनालभ्यतया तन्मात्रसाधनकायां विद्यायां वरणोपसंहारस्य अशक्यता । एवंसाधनभेदः फलभेदं साधयतीति पूर्वोक्तोन्निनीषाश्रुतिसिद्धभगवद्विचारे श्रौतकर्मज्ञानभक्त्यादिसाधनानां वरणेतरसाधनाभावस्य श्रौतसाधनविरुद्धानां कामादीनामपिप्रवेशेन वरणेप्रकारभेदः सिद्ध्यति । स च प्रकारसाधनभेदः पुराणोक्तोपबृंहणैः विशेषतोज्ञायते इतिविमृश्य सूत्रकृता इदमधिकरणं प्रणीतमित्याशयेन पौराणवचनविरोधपरिहारचिन्तनमत्रकृतम्, न तु प्राधान्येन तेषां विषयवाक्यतयोपन्यासः इतिवैदिकम्मन्यबहिर्मुखबोधनायवर्त्म ॥ वस्तुतस्तु सर्ववेदेतिहासानामिति इतिहासपुराणमिति वचनेनच श्रीमद्भागवतस्यासर्ववेदेतिहाससारभूतत्वात् पंचमवेदत्वाच्च वेदत्वमेव श्रीमद्भागवतस्येति तद्वाक्यत्वेनापि विषयवाक्यत्वमुपपन्नतरमेवेति नसंशयलेशोपि ॥ भावप्रकाशिकाकारैः एतदधिकरणं यथा विवृतं तदपि तेषां शब्दैरेवात्र लिख्यते । ननु ब्रह्मविदाप्नोतिपरं तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेयनाय इत्यादौ ब्रह्मज्ञाने सत्येव मोक्षः श्राव्यते, यमेवैषवृणुते तेन लभ्यः इत्यत्र तुवरणेसति आत्मलाभरूपो मोक्षः श्राव्यते, वरणं च स्वीयत्वेनाङ्गीकारात्मकं भक्तिमार्गे भवतीति भक्तौसत्यां तत् सिद्ध्यति इति भक्तेः समुच्चयो विकल्पोवेति संशये, एकादशस्कन्धीये मत्कामारमणं जारं मत्स्वरूपाऽविदोऽबलाः । ब्रह्ममां परमं प्रापुरिति भगवद्वाक्ये अविहितासत्त्या बोध्यते इति श्रुत्योः परस्परं विरोधात् भगवद्वाक्यस्यच तदुभयविरुद्धत्वात् नैकतरनिर्णय इति प्राप्ते आह–गतेरित्यादि । गतेः ज्ञानस्य अर्थवत्वं प्रयोजनवत्वमुभयथा मर्यादापुष्ट्याख्यमार्गद्वयेन एषउ एव साधु कर्मकारयति यमेभ्यो लोकेभ्यः उन्निनीषति इत्यादि श्रुतिभ्यो भगवान् सृष्टिपूर्वकाल एव एतेनैतत कारयित्वा एतत् फलं दास्यामीति विचारितवान् अतः तथैव तेषां मुक्तिः । तत्र पूर्ववाक्योक्तरीत्या मुक्तिसाधनाननुगमे हेतुरवश्यं वक्तव्यः । अन्यथा सन्देहानपायान्मुमुक्षुप्रवृत्तिव्याघातापत्तेः ॥ अतस्तदभावाय पुष्टिमर्यादारूपमार्गद्वयं हेतुत्वेन वक्तव्यम् । तत्र शास्त्रविहितज्ञानभक्तिसाधनेन मुक्तिः मर्यादा, तद्रहितानां अपि कृपया तद्दानं पुष्टिः । इदं च लोकवत्तु लीलाकैवल्यं इति न्यायात् सिद्धम् । अतोयं जीवं यस्मिन् मार्गेङ्गीकरोति तं तत्र प्रवर्तयित्वा तद्रीत्या तस्मै तत्फलं प्रयच्छतीनां नानुगमदोषः नवा मुमुक्षुप्रवृत्तिव्याघातः । अधिकारिभेदादेव व्यवस्थितिसौकर्यात् । अत्रार्थापत्तिं प्रमाणयति–अन्यथा हि विरोध इति– । हि यतो हेतोः अन्यथा मर्यादापुष्टिमार्गभेदेन व्यवस्थाया अकथने विरोधः पूर्वोक्तश्रुतिस्मृतीनामापतेत् । अतस्तदभावान्यथानुपपत्त्या एवमङ्गीकार्यं इत्यर्थः ।



## तमेवं नायमात्मेत्यादिश्रुतीनां विरोधपरिहारः अक्षरधियामित्यधिकरणे भाष्ये प्रकाशे च ।

भक्तिरेवमुक्तिकारणं इति प्रासङ्गिकविचारेण पूर्वाधिकरणे दृढतया प्रतिपाद्य दार्ढ्येन मुक्तिकारणताभक्तेरेवशास्त्रे दृश्यते तस्मात् भक्तिरेवावश्यमनुष्ठेयेति सिध्यति। एवंचमुक्तिहेतुतयाश्रुत्यन्तरोक्त अक्षरज्ञानस्य कागतिरिति आकांक्षायां तत्प्रकारं विचारयितुं अधिकरणमारभते इत्याशयेन विषयसंशयौ पूर्वपक्षकुक्षिविनिविष्टावेवेति पूर्वपक्षनिरूपणेनैवसूत्रमवतारयन्ति नन्वित्यादि। भगवद्विषयाणां श्रवणादिधर्माणां इति भाष्यस्थभगवद्धर्माणां इत्यस्यार्थः। अत्रपरंब्रह्म एतद्योध्यायति रसति भजति सोमृतो भवति–तमेवविदित्वा अतिमृत्युमेति नान्यःपन्थेति एतद्वाक्यद्वयं विषयवाक्यम्। तथाचज्ञानभक्त्योः मुक्तिसाधनत्वं कथंइति कस्यचेति विषयः। ज्ञानभक्त्योरुभयोरपि परममुक्तिसाक्षान्मुख्यसाधनता एकस्यवा? अस्मिन्नपि ज्ञानस्य भक्तेर्वापरममुक्तिसाक्षान्मुख्यसाधनता? अक्षरज्ञानमपि अक्षरप्राप्तिसाधनं परप्राप्तिसाधनंवा? एतौविषयसंशयावत्रपूर्वपक्षकुक्षिविनिक्षिप्ताविति उद्घाटितौ। अत्रोच्यते इत्यन्तभागेन विषयसंशयतद्बीजानां निर्देशः, श्रुतित्वाविशेषादित्यनेन पूर्वपक्षोक्तिः। ज्ञानभक्त्यात्मकोऽभयसाधनयोः मुक्तिसाधकतया श्रौतत्वस्याऽविशिष्टत्वात् मुक्तिकारणवैजात्यं प्रामाणिकमेवाङ्गीकरणीयम्, कारणवैजात्यं कार्यवैजात्यं साधयिष्यत्येव, किन्तु मुक्तेः–भूयश्चान्ते विश्वमायानिवृत्तिः–इत्यादिवचनैः मायानिवृत्तिरूपतया उभयसाधनसाध्यमुक्तौ वैजात्यस्य (तारतम्यस्य) अभ्युपगमः असम्भावितएव मायानिवृत्तेः उभयत्रापि साम्यात्, एवंकारणवैजात्येपि कार्यवैजात्यं नास्तीत्येकाऽनुपपत्तिः, किंचज्ञानकारणत्वबोधकश्रुतेः यथासावधारणता नतथा भक्तिकारणत्वप्रतिपादकश्रुतेः सावधारणता, अन्यच्च भक्त्या मामभिजानातीति वचनेन भक्तेः ज्ञानाभिव्यक्त्याचारितार्थ्यात् गतेरर्थवत्त्वाधिकरणे मर्यादामार्गे ज्ञानस्यमुक्तिसाधनताप्रतिपादनाच्च परंपरयैव मुक्तिकारणतां आदाय भक्तिकारणतानिरूपकवचनसमर्थनं आवश्यकं इति ज्ञानेनैव मुक्तिर्भवतीति अङ्गीकरणीयम्। एवंचकारणवैजात्येपि कार्यवैजात्यं भक्तेः मुक्तिकारणताप्रदर्शकवचने अवधारणाभावः भक्तेः ज्ञानजननेन चरितार्थतया अन्यकार्योत्पादनानावश्यकतादिसकलानुपपत्तिनिरसनं भवतीति पूर्वपक्षे प्राप्ते उत्तरमाह–ज्ञानसाधनत्वेनेति–। तथाहिपूर्वाधिकरणेपूक्तं हृदिकृत्वामुक्तेः ज्ञानसाधनत्वनिरूपकश्रुतितात्पर्यं निरूपयन्तः फलरूपभक्तिप्राप्तिस्वरूपयोग्यतासम्पादकत्वेन अक्षरज्ञानस्य परम्परया मुक्तिकारणत्वमाह। सावधारणवाक्यसिद्धत्वात् ज्ञानेनैवमुक्तिर्भवतीति पूर्वपक्षनिरासेतुशब्दः। पूर्वपक्षनिरासंज्ञानकारणत्वनिरूपकश्रुतितात्पर्यनिरूपणमुखेनोपपादनपूर्वकं उच्यते–वाजसनेयकेत्यारभ्य मुक्तिरितिभाव इत्यन्तम्। सकलसन्दर्भतात्पर्यमयमर्थेत्याहुः। अस्थूलादिवाक्योपसंहारे यएतद्विदित्वेति श्रुत्या अक्षरवेत्तुः ब्रह्मत्वमुक्त्वा अथपरेति वचनेनपरविद्याया अक्षरज्ञानजनकत्वं चोक्त्वा इष्टप्राप्त्युपायरूपे ज्ञानमार्गे अस्थूलत्वादृश्यत्वादि गुणकाऽक्षरज्ञानान्येवइष्टप्रापकाणि निरूप्यन्ते नतुपुरुषो-

त्तमविषयकाणि इतिज्ञानविषयविशेषणबलान्निश्चीयते । अक्षरज्ञानफलविचारेतु फलबोधकश्रुतिस्मतिवचनानां विचारे अक्षरसायुज्यपरसायुज्यरूपफलद्वयं दृश्यते, तत्फलद्वयं किंतरतमभावपूर्वकं भवति तारतम्यविरहेण भवति समुच्चित्य भवति विकल्प्य भवति सकलाक्षरज्ञान्यधिकारिभोग्यंभवति अमुकाधिकारिमात्रभोग्यंभवति अधिकारिभेदोपि किंसाधनैक्ये भवति साधनप्रभेदे भवति साधनप्रभेदोपि अधिकारिभेदेन भवति विकल्पतो भवति इत्याद्यनेकप्रश्नोपस्थितिरत्रभवति । उत्तरविचारेतु अक्षरपरयोरुभयोरपि श्रुतौसावधिनिरवधि आनन्दरूपतया आनन्दवत्वेनच प्रतिपादनात् उभयप्राप्तिः तरतमभावेन भवति इतिअभ्युपेयमेव । उभयप्राप्तौ तारतम्याङ्गीकारेतु समुच्चयोपि नप्रतिपादनार्हः । नह्येकेनैवाधिकारिणा गणिताऽगणितानन्दानुभवो युगपदेवाऽनुभवितुं शक्यः, पुरुषः सपरः पार्थ भक्त्यालभ्यः त्वनन्यया। भक्त्यात्वनन्यया शक्यः, नायंसुखापो भगवान्, ज्ञानिनां चात्मभूतानां यथाभक्तिमतामिह। केवलेनहि भावेन, नायमात्मेत्यादिवचनानि यदि नोपलभ्येरन् विकल्पः प्राप्तावसरो भवेदपि, किन्तु पूर्वनिर्दिष्टानेकवचनोपलब्धिः–विकल्पावसरमपिरुणद्धि। तमाहुः परमांगतिम्, यद्गत्वाननिवर्तन्ते–ब्रह्मविदाप्नोति परं इति एकस्यैवाक्षरज्ञानरूपसाधनस्य फलभेदोपलब्धिरेव अधिकारिभेदं साधनविनियोगपरंपरां अधिकारिविशेषस्य इतरवरणभक्त्यात्मकसाधनसमुच्चयमपि अनुमापयति । एतेन अधिकारिभेदोपि साधनैक्येत्यारभ्य विकल्पतो भवति इत्यन्तं यत् पृष्टं तदप्युत्तरितं परप्राप्तिरूपफलस्य भिन्नाधिकारिभोग्यताया भिन्नसाधनकतायाः प्रमाणतो प्रतीतेः । सर्वमेतत् पूर्वोक्तं मनसि निधायोक्तं तत्फलविचारे चेत्यारभ्य फलत्वेनोच्यतेत्यन्तम् । यद्यप्यत्राक्षरविदोपरप्राप्तिरेवफलतयोच्यते तथापितत्फलेत्यत्र तच्छब्दस्य अक्षरप्रतिपादकत्वात् तत्फलेत्यस्य अक्षरज्ञानफलेत्येवार्थोङ्गीकरणीयः तथाच अक्षरज्ञानफलं उभयथाकेवलेनसमुच्चितेनाक्षरज्ञानेन तमाहुरित्यादिवचनैः दृश्यते गतेरर्थवत्वमित्यत्रप्रपंचितंचेतितदनपह्नुत्य अस्मत् प्रदर्शितरीत्यैव तत्फलविचारे चेत्यस्याः पक्तेरर्थो विधेयः। नच अक्षरपरयोरैक्यमङ्गीकृत्य ब्रह्मवित् ब्रह्मप्राप्नोतीति ब्रह्मविदाप्नोति इत्यस्याः श्रुतेरर्थो ग्राह्यः तथा सति ब्रह्मवेदब्रह्मैव भवति इतिवत् ब्रह्मवित् ब्रह्मप्राप्नोति इत्येवमेव श्रुतिपाठोपलब्धिः स्यात् किन्तु एवं पाठानुपलब्ध्या परपदप्रयोगेण च अक्षरपरयोरैक्यमस्वीकार्यम्। ब्रह्मवित् ब्रह्मप्राप्नोतीति श्रुत्यर्थोप्यग्राह्यः । अपरंच अक्षरात् परतःपरः इति श्रुतिविरोधेनापि एवंश्रुत्यर्थोऽग्राह्यः। नचदिव्योह्यमूर्तइत्यत्र अक्षरपदेन प्रकृतिः जीवात्मा वा गृह्यते इति सांप्रतम् । प्रकृतविरोधात्, अत्रजगत्कारणरूपचैतन्यस्यैव प्रकृतत्वात् । तथाच अव्यक्तोक्षर इत्युक्तः तमाहुःपरमां गतिम्, यंप्राप्य ननिवर्तन्ते तद्धाम परमंमम । कूटस्थोक्षर उच्यते इतिगीतोपबृंहित एवाऽक्षरो ग्राह्यः । तस्माच्चाक्षरात् परः पुरुषोत्तम एवेति गीतास्थ अक्षरादपि चोत्तम इति वाक्यान्निश्चीयते, अतः तत्प्राप्तेरेव फलत्वं निश्चितम्। परप्राप्तिकारणविचारेतु यद्यपि परप्राप्तिः वरणेन वरणजनितभक्त्यैव वा भवति, किन्तु ब्रह्मविदिति श्रुत्यायोवेदेति तद्विवरणश्रुत्याच प्राप्तृविशेषणत्वेन अक्षरज्ञानमुक्तं अतोनसाक्षात् परप्रापकमक्षरज्ञानं अपितुपरप्राप्तिस्वरूपयोग्यतासम्पादकमेवाक्षरज्ञानं

परम्परयैवपरप्राप्तिमुपकरोति। वरणजनितभक्तेः भक्तिमार्गीयत्वात् वरणस्यवा साधनत्वं तु गीतायां भक्त्या मामभि इति वाक्ये भक्त्येतितृतीयया उच्यते, मामित्यनेन भक्तिव्यापार-भूतं पुरुषोत्तमज्ञानमुक्तं न अक्षरज्ञानम्। परायया तदक्षरमधिगम्यते इत्यत्र अधिगम्यते इत्यस्य प्राप्त्यर्थकत्वाङ्गीकारेपि अक्षरप्राप्तिरेवतेन उक्ता भवेत् सा च ब्रह्मवेद ब्रह्मैव भवति इत्यत्रोक्तैव। एवमपि भक्त्या मामभीति वाक्यात् पूर्वं यत्–ब्रह्मभूतः प्रसन्नात्मान शोचति नकांक्षति। समः सर्वेषु भूतेषु मद्भक्तिंलभते परां॥ इति वाक्यं तस्मिन् या ब्रह्मभूतस्य भक्तिलाभोक्तिः तत्रब्रह्मभूतेत्यनेन आनन्दाविर्भावात्मकस्वरूपलाभरूपो ब्रह्मभावउक्तः। आनन्दाविर्भावस्तु अविद्यानाशजन्यः अविद्यानाशोपि अक्षरज्ञानजन्यः, एवं च परप्राप्तिपूर्व-कक्षारूपब्रह्मभावे एव अक्षरज्ञानं विश्राम्यति। तेनाक्षरप्राप्तेः मुक्तित्वंयत् भक्तिमार्गे उच्यते तत् अक्षरस्य पुरुषोत्तमपरमधामत्वेन पुरुषोत्तमाविनाभावात् एवोच्यते। अत्रेद-माकूतम्। यद्यप्यक्षरप्राप्तेः मुक्तित्वं ज्ञानभक्त्यात्मक उभयमार्गे प्रथितम्। तथापितत् भिन्नभिन्नदृष्ट्या विभिन्नविभिन्नरीत्या च। ज्ञानमार्गे अक्षरसायुज्यमेव परममुक्तिः न ततो अधिकतयाकापि उत्कृष्टास्थितिः। अतोज्ञानमार्गेज्ञान्युपास्याक्षरे प्रवेशात्मकसायुज्यमेव परमकाष्ठापन्नमुक्तिरूपम्, न ततोधिकं किंचित् इति ज्ञानमार्गेपरममुक्तिदृष्ट्या मुक्तिपद-प्रयोगः। भक्तिमार्गे न तथा तत्रतु परममुक्तिः पुरुषोत्तमप्राप्तिः सापिलीलानुभवरूपैव। यत्र प्रवेशात्मकसायुज्यरूपापुरुषोत्तमप्राप्तिरपि नप्रामुख्यमनुभवति मध्यमफलतैवतस्याः अङ्गीक्रियते तत्राक्षरप्राप्तेःपरममुक्तित्वस्य चर्चैवका अतःपुष्टिभक्तिमार्गे अक्षरप्राप्तेः मुक्तित्वं पुरुषोत्तमाऽविनाभूततल्लीलाधामात्मकभक्तोपास्याक्षरप्राप्तिदृष्ट्यैव। अत्रायं क्रमः प्रथमतो ज्ञान्युपास्याक्षरा–ऽपरोक्ष–ज्ञानं तदनुकदाचित् अक्षरे लयः भवतिकदाचित् लयंविनापि ब्रह्मभावप्राप्तिः भवतितत्रलीनस्य अनुग्रहेण उद्धारः पश्चात् विशेषानुग्रहपूर्वकं वरणंभवति वृतेसति भक्तिलाभः प्राप्तभक्तेःप्रथमंभक्तोपास्याक्षरसाक्षात्कारः तदनु ऊर्जितभक्त्यापुरुषो-त्तमापरोक्षसाक्षात्कारः, प्राप्तब्रह्मभावस्यापि पश्चात् विशेषानुग्रहेणवृतत्वं भवतिवृतेसति भक्तिलाभमारभ्यपुरुषोत्तमसाक्षात्कारपर्यन्तंपूर्वरीत्याब्रह्मानन्दादुद्धृतोपासकवदेवभवति। ततो यथाधिकारं पुरुषोत्तमचरणकौस्तुभालकेषु प्रवेशः लीलानुभवो वाकेवलदर्शकरूपेण लीलादर्शनं वा दासदासीसुहृदादिभेदेन लीलोपयोगित्वं लीलासम्बन्धित्वं वा लीलामध्य-पातितयाभवति। नन्वेवमक्षरज्ञानिनोपि विशेषानुग्रहेण भक्तिलाभानन्तरं यदिधामप्राप्तिः तर्हि ब्रह्मवेद ब्रह्मैव भवति इत्यत्रोक्त एवकारः (अवधारणात्मकः) व्याकुप्येत अस्मिन् पक्षे धामप्राप्तिरेव जातानब्रह्मभावोलब्ध इतिचेत् श्रुणु–धामात्मकाक्षरप्राप्तिपक्षेपिमृत्युदुः-खातिक्रमेण पुनरावृत्त्य भावेन अक्षरात्मकदिव्यशरीरप्राप्त्या ब्रह्मभावएवभवति इति ब्रह्मै-वेत्यत्रधारणात्मक एवकारः नकथंचिदपि व्याकुप्यते। एवं पुरुषोत्तमाक्षरज्ञानप्रतिपादक-श्रुतिस्मृतिवचनयोरविरोधेसति अक्षरविषयिणीनां धियां मुक्तिसाधनेषु गणना श्रुतौ यादृश्यते सा सामान्यतद्भावाभ्यां हेतुभ्यां एव॥

किं सामान्यमित्याकांक्षायां पुरुषोत्तमसम्बन्धिसम्बन्धः पुरुषोत्तमसम्बन्धिसम्ब-न्धित्वं वासामान्यमिति ज्ञेयम्। पुरुषोत्तमसम्बन्धिसम्बन्धे मुक्तिरितितु भक्तसङ्गे सत्सङ्ग-

लब्धया भक्त्या मयिमांयउपासिता। सर्वैमे दर्शितंसद्भिः अञ्जसाविन्दते पदम्। इति वचनेन सिद्धम्। सचपुरुषोत्तमसम्बन्धिसम्बन्धः तद्धामरूपाक्षरज्ञानेप्यस्तीति सामान्यम्। मर्यादामार्गेऽङ्गीकृतानां इत्याद्युक्तरीत्या तद्भावो ब्रह्मभावः ताभ्यां हेतुभ्यां अक्षरज्ञानानां मुक्तिसाधनेषुप्रवेशोस्ति। आदितएव पुष्टिभक्तिमार्गेङ्गीकृतानांभक्तानां पुष्टिभक्तिमार्गीय-दृष्ट्या अक्षरज्ञानानां मुक्तिसाधनेगणनापुरुषोत्तमसम्बन्धिसम्बन्धरूपसामान्यदृष्ट्या भवति। आदितःमर्यादामार्गेऽङ्गीकृतानां पश्चात् अनुग्रहविशेषेण भक्तिमार्गेप्रविष्टानां पुष्टिभक्तानां पुष्टिभक्तिमार्गीयदृष्ट्या अक्षरज्ञानानां मुक्तिसाधने गणना तद्भावहेतुदृष्ट्या भक्तिप्राप्तिपुरुषोत्तमप्राप्तिस्वरूपयोग्यतासम्पादकतया भवति। अक्षरज्ञानस्य मुक्तिसाधन-तावच्छेदकं रूपं पुरुषोत्तमसम्बन्धिसम्बन्धित्वं इति ज्ञापनाय प्रथमोहेतुः सामान्यपदेन गृहीतः। वेदान्तिमतेमुक्तेः ब्रह्मलाभरूपतायाःनिश्चितत्वात् ब्रह्मलाभस्य अक्षरप्राप्ति-पुरुषोत्तमप्राप्तिरूपोभयात्मकत्वात् (निरतिशयसंक्षिप्तपद्धत्याएतदुक्तम्। विस्तृततया विचारे तु लोकवेदातीतपुरुषोत्तमलाभलोकवेदप्रथितपुरुषोत्तमलाभ उत्तमपुरुष-नारायणलाभव्यूहलाभरामाद्यवतारलाभभक्तोपास्याक्षरलाभत्रिमूर्त्यन्तर्गतविष्णुलाभज्ञान्यु-पास्याक्षरलाभादिरूपतया अनेकात्मकत्वात् इत्येव वक्तव्यम्। अत्रादिपदेन अलौकिक-सामर्थ्यसायुज्यसेवोपयोगिदेहादिरूपेण लाभः सालोक्यादिरूपेण लाभश्चोक्तः) पुरुषोत्तम-स्याक्षरात् परत्वस्य श्रौतस्मार्तवचनैः श्रुतत्वाच्च परामुक्तिःपुरुषोत्तमप्राप्तिरेव। अतोऽक्षर-ज्ञानानां अक्षरप्रापकत्वेन ज्ञापकत्वेनवानपरममुक्तिकारणता किन्तूक्तरीत्या पुरुषोत्तम-सम्बन्धिसम्बन्धितया भगवद्धामज्ञापकतया परममुक्तिकारणतानिश्चेया। एतदुच्यते वस्तुतस्तु पुरुषोत्तमप्राप्तिरिति। दृष्टान्तमवतारयन्ति नन्वक्षरस्येत्यादि। तत्रैव लय इति ब्रह्मैव भवति इत्यवधारणात् अक्षर एव लयः। मुक्तिलाभ इति ब्रह्मविदाप्नोति परमिति श्रुत्युक्तपरप्राप्तिसाधनीभूतभक्तिलाभः।

हेतुमिति भगवदिच्छारूपम्। अग्रिमोग्रन्थः निगदव्याख्यातः। तथाच भगवदिच्छयैव विशेष इत्यर्थः। सूत्रोक्तसम्मतिं विवरणार्थमवतारयन्ति–ननु श्रवणादेरित्यादिः। सविवरणमुच्यते–तत्रेत्यादि। गीताया अष्टमाध्याये। वैलक्षण्यमिति। साधनसौकर्यं पुरुषोत्तमप्राप्तिरूपफलोत्कर्षरूपं वैलक्षण्यं चेति। स्वस्यवक्तुमिति गीतायां अष्टमाध्याये अक्षरनिरूपकप्रकरणे—अक्षरस्यपरमगतित्वं स्वधामत्वंचोक्त्वा पुरुषःसपरःपार्थभक्त्या लभ्यस्त्वनन्यया इति वचनेन परस्यभक्त्यैकलभ्यत्वं यद्वक्ष्यति तत् अक्षरादपिचोत्तमः इति वाक्यान्तरेणअक्षरादुत्तमत्वेनसिद्धेस्वस्मिन् स्वपरमाभिन्नेनारायणएवविश्राम्यतिइति स्वस्यै-वोच्यते, बाधकाभावेस इतितच्छब्देन सन्निहितपरामर्शाच्च स्वस्यैवस इत्यनेनग्रहणं भवति इत्युक्तं–स्वस्यवक्तुमित्यन्तेन। अत्रेति। सहस्रयुगेत्यादिग्रन्थे। गीतायांअक्षरशब्देन जीवः मुक्तजीवोवाउच्यते इतिमतान्तरमुत्थाप्यनिरस्यते–एतेनेत्यादि। क्षरःसर्वाणिभूतानि इति वाक्यान्तरसिद्धं भूतग्रामं व्यक्तकोटौ निवेश्य ततःपरत्वकथनेनेत्यर्थः। हेत्वन्तरमुच्यते यं प्राप्येति। तथाचभूतग्रामपदेनजडान् गृहीत्वा अक्षरपदेन जीवग्रहणे पुरुषोत्तमधामत्वा-संभवः। किंच नित्यमुक्तत्वापत्त्या शास्त्रवैफल्यापत्तिरूपोभयदोषप्रसक्तिर्भवेत् अतोगीतायां

अक्षरपदेन जीव उच्यतेतिमतमयुक्तम् । अस्मादेवसन्दर्भात् अन्यद्यत् अर्थचतुष्टयं सिद्धं तदुक्तम् इतएवेत्यादि ज्ञेयइत्यन्तम् । इतएवेति । अक्षरस्य भगवद्धामत्वादेव । इत्यर्थोज्ञेय इति । तमाहुः परमांगतिम् सयाति परमांगतिम्, इत्युभयत्रापिपरमां गतिं इत्येकशब्दाज्ज्ञेयं इत्यर्थः । तथाच अक्षरस्यपुरुषोत्तमसम्बन्धित्वेसत्यपिनपुरुषोत्तमप्राप्तिहेतुत्वम् । पुरुषोत्तमप्राप्तिहेतुतावच्छेदकस्य अनन्यभक्तित्वस्य अक्षरे अभावात् इत्येवमेतेनसन्दर्भेण साशंकानिवारिताअतोनकार्या ॥ ननुश्रुतौ अक्षरात् परत्वमेवपुरुषस्योच्यते न तु अक्षरेस्थितत्वं परस्याक्षरेस्थितिः यदि उच्येत स्वप्रतिष्ठितत्वं हीयेतेतितद्धामपरमंममेति गीतावाक्यमन्यथाव्याख्येयम्, इत्याशंक्याहुःकिंचेत्यादि। अस्यांश्रुतौ सर्वाधारत्वं सर्वदेवनिषदनस्थानत्वं सर्वात्मकत्वं च पादत्रयेणोच्यते तुरीयेतदाधारउच्यतेतस्यार्थमाहुःअत्रेत्यादि । भक्तहृदयाकाशस्यैवपरमव्योमपदेन परामर्श इत्यत्रप्रमाणमुच्यते अतएवेत्यादिना । अस्तुनाम भक्तहृदयाकाशे प्रकाशमानत्वं अक्षरस्य तथापिलोकात्मकताकथम्, अतआहुः यदित्यादि । तथाच प्रजापतिलिङ्गात् अक्षरस्य लोकात्मकता ग्राह्या इत्यर्थः ।

उक्तोर्थः पुराणेनोपबृंह्यते अतएवेत्यादिना । इतोपि शुकवाक्यादपीत्यर्थः । तथा च श्रुतौ पुराणेच तथासिद्धत्वात् उक्तोभयप्रमाणोपबृंहितं भगवद्गीतावचनं नान्यथानेतुं शक्यं इत्यर्थः । स्वप्रतिष्ठताहानिं परिहरन्ति एवंसतीत्यादिना । छान्दोग्ये स्वेमहिम्नि प्रतिष्ठित इतिकथनात् तैत्तिरीये ब्रह्मपुच्छमितिकथनाच्चाऽक्षरस्यभगवद्विभूतितया भगवदभिन्नत्वात् चरणरूपतयाभक्तिसामान्याच्च भगवतअक्षरे स्थितावपि नस्वप्रतिष्ठितत्वहानिः । अक्षरस्य स्वाभिन्नस्वायुतसिद्धधर्मभूतसच्चिदानन्दांशत्वमेवेति सर्वथा स्वाभिन्ने अक्षरे प्रतिष्ठितत्वं अपिस्वप्रतिष्ठितत्वं एवातो अक्षरस्यलोकात्मकतापिसर्वथाश्रुत्यविरुद्धेति निरवद्यैव। एवमत्र मुक्तिस्वरूपं अस्थूलत्वादयोधर्माःसफलाविचारिता । रसतिभजतिइत्यादि श्रुतिःभजनादिधर्मानाचरणीयत्वेनबोधयतीति बोधकताप्रकारश्चोक्तः । तेनभगवत्प्राप्तिप्रेप्सुनाभक्तिरेव कार्या नतु पूर्वकक्षायांविश्रान्तव्यम्, द्वितीयस्कन्धे भगवान् ब्रह्मकात्स्न्येंनेत्यत्रभक्तावेव श्रुतितात्पर्यस्यनिर्धारितत्वात् गीतायांद्वादशाध्यायेपि मय्यावेश्य मनोयेमां इत्यादिना स्वोपासनयैवशीघ्रं सुखेनस्वप्राप्तिकथनात् अक्षरोपासकस्यदुःखेन स्वप्राप्तेरुक्तत्वात् भक्तेरेवावश्यकत्वं सिद्ध्यति । अत्राक्षरस्य गणितानन्दत्वात् ब्रह्मविदाप्नोतिपरं इत्यत्र पुरुषोत्तमज्ञानस्य भक्त्यामामितिगीतावाक्ये तद्भक्तेः औपसदवदिति दृष्टान्ते इच्छायां एवप्राधान्यबोधनेन परंपरया कर्मणोपि क्वचित् प्रापकत्वसूचनात् क्रियया ज्ञानेनभक्त्याइच्छयाच सायुज्यप्राप्तिबोधकं दोर्भिश्चतुर्भिः विदितमितिविशेषणमपि प्रतिपादितमितिज्ञेयम् ॥



## अस्याधिकरणस्य भावप्रकाशिकायां उक्तं विवरणं भावप्रकाशिकास्थशब्दैरेवोद्ध्रियते ।

अथर्वोपनिषत्सु भजति सोऽमृतो भवति इति भक्तेर्मुक्तिसाधनत्वं श्राव्यते श्रुत्यन्तरे तु तमेव विदित्वा इत्यादौ ज्ञानस्य तत्र कस्य गुणभावः कस्य मुख्यतेति संशये श्रुतित्वाविशेषात् उभयोः कारणत्वे हेत्वनुबद्धस्य कार्यवैजात्यस्यापातान्मुक्तौ च तदसंभवाद्भक्त्या मामभिजानातीति भगवद्वाक्ये भक्त्या ज्ञानजननकथनेन भक्तेर्ज्ञानं जनयित्वोपक्षयात् ज्ञानेनैव मुक्तिरिति प्राप्तम् । तत्राह–अक्षरेत्यादि । तुः पूर्वपक्षनिरासे अक्षरधियाम्–एतद्वैतदक्षरं गार्गि अस्थूलमनणु, अथपरा यया तदक्षरमधिगम्यते यत्तदद्दश्यमग्राह्यम्–, इत्याद्युक्तानामक्षरविषयकज्ञानानां अवरोधः मुक्तिसाधनेषु प्रवेशः गणनं सः सामान्यतद्भावाभ्यां, पुरुषोत्तमसम्बन्धिसम्बन्धे मुक्तिरिति पुरुषोत्तमसम्बन्धिसम्बन्धित्वं सामान्यम् । तद्भावो ब्रह्मभावः ताभ्यां हेतुभ्याम् । अयमर्थः । ब्रह्मविदाप्नोति परं इत्यत्राक्षरविदः परप्राप्तिः फलत्वेनोच्यते, परश्च पुरुषोत्तम एव अक्षरात्परतः परः इत्यस्याः श्रुतेः अक्षरादपि चोत्तमः इति गीतावाक्येनोपबृंहणात् च भगवानेव परः इति तत्प्राप्तिरेव परममुक्तिः । अव्यक्तोक्षर इत्युक्तः तमाहुः परमां गतिम्, यं प्राप्यन निवर्तन्ते तद्धाम परमं मम इति गीतावाक्यात् अक्षरं तद्धामत्वात् तत्सम्बन्धि तद्विषयकं च ज्ञानं पुरुषोत्तमसम्बन्धिसम्बन्धि । किंच भक्तिस्तावत् ब्रह्मभावोत्तरंभवतीति गीतायामुक्तम् । ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् इति । ब्रह्मभावश्चाक्षरज्ञानेनाविद्यानाशे सति भवति । तथा च पुरुषोत्तमज्ञानव्यापारकभगवत्प्राप्तिरूपमुक्तिकरणभूतायां साधनसम्पत्तौ स्वरूपयोग्यतामक्षरज्ञानानि संपादयन्तीति मुक्तिपूर्वकक्षाविश्रान्तत्वात् मुक्तिसाधनेषु तदवरोधाद्भक्त्या मामभिजानातीति पुरुशोत्तमज्ञानमादाय पूर्वपक्षोऽसंगतः । नन्वक्षरस्याऽविशिष्टत्वात् तदुपासकानां मध्ये केषांचिदक्षरे एव लयः केषांचित् गीतोक्तरीत्या भक्तिलाभः इति फलवैजात्यं कथमुपपद्यते इत्याशंक्य तत्र हेतुं दृष्टान्तेनाह औपसदवदिति । उपसद इदं औपसदं तद्वत् उपसदाख्ये कर्मणि ध्रौवाज्यात् स्रुचि चतुरवत्तं चमसे वा पंचायत्तं यदाज्यं तत्तानूनप्त्रमित्युच्यते, अनाधृष्टमस्यनाधृष्यं इति मन्त्रेण षोडशर्त्विजोऽनुमे दीक्षामिति मन्त्रेण यजमानश्चमसमवस्पृशति तत्तानूनप्त्रस्पर्शाख्यं कर्मौपसदम्, तत्रविशेषः श्रुतौ कल्पे चोच्यते । तत्समवमृशन् यं ऋत्विजं कामयेतायं यज्ञयशसमृच्छेदिति तं प्रथममवमर्शयेत् इति । अत्र सर्वेषां ऋत्विजां तानूनप्त्रत्वे समानेपि यस्मिन् यजमानस्य यज्ञयशोदानेच्छा तत्रैव तथा कृतिः नसर्वेषुतद्वत् । तथा च तत्र यथर्त्विजामविशिष्टत्वेपि यजमानेच्छाफलवैजात्यनियामिका तथात्रभगवदिच्छेति तया तथेत्यर्थः । ननु श्रवणादीनां यथापुरुषोत्तमसम्बन्धित्वे तत्प्राप्तिहेतुत्वम्, तथा अक्षरस्याप्यस्त्विति शंकायां सा न कार्या इत्येतदर्थं सम्मतिमाह–तदुक्तमिति । भगवद्गीतासूक्तमित्यर्थः । तत्र हि यदक्षरं वेदविदो वदन्ति इत्यादिना सयाति परमां गतिम् इत्यन्तेनाक्षरप्राप्त्युपायं उक्त्वा अनन्य-

चेताः सततं इत्यादिना स्वप्राप्त्युपायं स्वस्य तद्वैलक्षण्यं चोक्त्वा स्वस्य भक्त्येकलभ्यत्वं स्वस्वरूपं च वक्तुं पूर्वं क्षराक्षरयोः स्वरूपं कथयन् यं प्राप्य ननिवर्तन्ते तद्धाम परमं मम इत्यनेनाथक्षरस्य ज्ञानिमुक्तिस्थानत्वं स्वधामत्वं चोक्त्वा पुरुषः सपरः पार्थ भक्त्या लभ्यस्त्वनन्यया। यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ इति भक्त्यैकलभ्यत्वं परत्वं सर्वभूताधारत्वं सर्वविस्तारकत्वं च स्वस्योक्तवान् । अतः पुरुषोत्तमसम्बन्धित्वमात्रं नतत्प्राप्तिहेतुतावच्छेदकम् । किन्तु पुरुषोत्तमसम्बन्धिभक्तित्वम् , तच्चाक्षरे नास्तीत्यतः तथानेत्यर्थः ॥



चिन्तासन्तानहन्तारो यत्पादाम्बुजरेणवः ।
स्वीयानां तान्निजाचार्यान् प्रणमामि मुहुर्मुहुः ।
यदनुग्रहतो जन्तुः सर्वदुःखातिगो भवेत् ।
तमहं सर्वदा वन्दे श्रीमद्वल्लभनन्दनम् ।
बुद्धिप्रेरककृष्णस्य पादपद्मं प्रसीदतु ।
ध्यानासमर्थजीवानां अस्माकं सर्वदास्वतः ।
नमामि श्रीबालकृष्णं यशोदोत्सङ्गलालितम् ।
पूतनासुपयःपानरक्षिताशेषबालकम् ।
मुक्तिर्यदीया भक्त्यावानुग्रहेणैव लभ्यते ।
तां पुष्टिसरणिं वन्दे श्रीवल्लभप्रकाशिताम् ।

ननु प्रमाणपरामर्शशून्यैः इदमुच्यते अनुग्रहभक्त्यादिः मुक्तिसाधनमिति । तथाहि ज्ञानादेव तु कैवल्यं तमेव विदित्वा इत्यत्र चान्ययोगव्यवच्छेदक एवकारोपलब्ध्या तमेवं विद्वान् इत्यत्र वेदनोक्त्या च तमेवं तमेवेत्युभयश्रुत्युत्तरार्धेनान्यः पन्थेति इतरनिषेधेन च ऋते ज्ञानान्नेति श्रुतौ ऋतेपदप्रयोगाच्च आरब्धे स्मृत्युपबृंहितविचारे परा अनन्ययेति विशेषणद्वयविशेषितया भक्तेः ज्ञानानतिरिक्तत्वात् यद्वा भक्त्यामामिति वचनेन भक्तेः ज्ञानाभिव्यक्त्यैव चारितार्थ्याच्च नानुग्रहभक्तिकर्मणां मुक्तिसाधनत्वं प्रतिपादनार्हप्रमाणोपपत्त्युभयलेशस्यापि अदर्शनात् ॥ बन्धस्याऽविद्यारूपतया भूयश्चान्ते विश्वमायानिवृत्तिः इति श्रुत्या व्यामोहिकामायाकार्यरूप अविद्यात्मकबन्धनिवृत्तिरूपतया मुक्तेः अज्ञानस्य ज्ञानेनैव निवृत्तेः उपपद्यमानतयादृष्टतया च ज्ञानमेवमुक्तिसाधनमित्यङ्गीकार्यम् । ज्ञानमभिव्यज्य भक्तेः चारितार्थ्यात् भक्तिः ज्ञानसाधनमित्येवोपपद्यते । एवमेव तत्वतो ज्ञात्वा विशते इति भागस्य सार्थक्यं भवति । अन्यथा सर्वाणीमानि वचनानि व्याकुप्येरन् । चित्सुख्यां अपि इदमेव मतं पूर्वनिर्दिष्टरीत्यैव समर्थितं श्रीचित्सुखमुनिभिः । तथाहि ब्रह्मविदाप्नोतिपरं ब्रह्मवेद ब्रह्मैव भवति तरति शोकमात्मवित् इति वेदान्तवाक्यजनितात्मविज्ञानान्मोक्षः श्रूयते । सच सविलासाज्ञाननिवृत्तिलक्षणः । संसारस्य दुर्निरूपत्वेन अविद्यारूपत्वात् तस्य चाहं कर्ता भोक्ता इत्याद्यपरोक्षविभ्रमलक्षणस्य परोक्षज्ञानान्निवृत्त्यनुपपत्तेः ॥

ब्रह्मणि च सकलकरणागोचरे प्रमाणान्तरेण प्रत्यक्षज्ञानानुत्पत्तेर्वाक्याच्चापरोक्षज्ञानानुत्पत्तौ अनिर्मोक्षः स्यादिति विपक्षे बाधकतर्कसम्भवान्नाभाससमानताऽनुमानस्य तस्माच्छब्दादेवाऽपरोक्षज्ञानात् कैवल्यमिति सकलमनाविलम् । किंच यच्चित्सुखमुनिभिः–नहि शुक्तिकाशकलं सकलमाकलयतः कलधौतविभ्रमनिवृत्तिः स्नानाचमनादिकर्मापेक्षया

विलम्बते। तदेवं लौकिकेनन्यायेन ब्रह्मसाक्षात्कार एव तदविद्यानिवृत्तिहेतुरित्यास्थेयम्। श्रुतिस्मतिषु कर्मणो निर्वाणकारणतानिराकरणाच्च एतदवसेयम्। श्रूयते हि तमेव विदित्वा नान्यः पन्था नकर्मणा नप्रजयाधनेन, नास्त्यकृतः कृतेनेत्यादियदेतदुक्तं सर्वमेतत् ज्ञानातिरिक्तभक्तेः मुक्तिसाधनत्वनिरासेपि समानतयोऽपयुज्यते। तथाहि अज्ञाननिवृत्तिरूपमुक्तिप्राप्त्यर्थं ज्ञानापेक्षा तु अङ्गीकरणीयैव जातेतत्त्वज्ञाने भक्त्युदयपर्यन्तं मुक्तिः विलम्बते इति वक्तुमशक्यम्। चित्सुख्युक्तदृष्टान्तेनैव विलम्बस्य निवृत्तत्वात्। यद्यपि चित्सुख्यामयंसन्दर्भः कर्मणोमुक्तिकारणत्वनिरसनपर एवोपलभ्यते, तथाप्यस्मिन्नुपन्यस्ता युक्तिः तमेव विदित्वानान्यः पन्थेति श्रुतिश्च भक्तेः मुक्तिसाधनत्वमपि निराकरोतितमेवेत्यत्र अन्ययोगव्यवच्छेदक एवकारेण नान्येति निषेधेनच ज्ञानभिन्नकर्मभक्त्यात्मकोभयसाधनयोः मुक्त्यसाधनत्वस्य साधितत्वात्।

ननु वेदान्तिमते अविद्यानिवृत्तिमात्रत्वमेव मोक्षस्य न वाच्यं एवं च दुःखाभावरूपतैव मुक्तेः स्यात् तथा च काणादाक्षपादसमयप्रवेशः वेदान्तिनां भवेत् एतत्तु सर्वथाऽनुचितम्, अतो दुःखाभावपूर्विका सुखरूपैव मुक्तिः वेदान्तिमतेऽभ्युपेया, सुखप्राप्तिरपि ब्रह्मसुखप्राप्तिरेव वक्तव्या मुक्तौ निरतिशयनित्यसुखप्राप्तेरेववक्तुमुचितत्वात्, नित्यनिरतिशयसुखप्राप्तिस्तु ब्रह्मलाभात्मिकैव-वाच्या परब्रह्मलाभस्त्वनन्यभक्त्यैव भवतीति गीतायां पुरुषः स परः पार्थ भक्त्यालभ्यस्त्वनन्यया। इत्यत्रोक्तम्॥ अन्यच्च भक्त्यात्वनन्यया शक्य अहमेवं विधोर्जुन। ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप॥ अत्र प्रवेष्टुमित्यनेन प्रवेशात्मकब्रह्मलाभमुक्त्वा भक्त्येत्यनेन तस्य भक्तिकरणकत्वं साधितम्। अत अविद्यानिवृत्त्यंशे ज्ञानोपयोगस्य शक्यत्वेपि ब्रह्मलाभस्तु भक्त्यैवाभ्युपेयः भगवद्वचनसिद्धत्वात्। तस्मात् भक्तिसमुच्चितं ज्ञानं ज्ञानसमुच्चिता भक्तिर्वा मुक्तिसाधनं इत्युररीकार्यं तेन ज्ञानमात्रमेव मुक्तिसाधनमिति पक्षः-असाध्विति प्राप्ते-उच्यते भवेदस्यासाधुत्वं यदि गीतैव प्रमाणमित्यङ्गीक्रियेत किन्तु श्रुतीनां अप्रतिहतं स्वतःप्रामाण्यं ज्ञानमेव मुक्तिसाधनमिति पक्षं साधुतया व्यवस्थापयिष्यतीति नकथंचिदप्यसाधुत्वमस्यपक्षस्य। ननुतर्हि गीतावाक्ययोः कागतिरितिचेत्-विरोधेत्वनपेक्षंस्यादितिन्यायेन गीतावचनयोरेवान्यथानयनमावश्यकं नतुश्रौतवचनानाम्। किंच भक्त्यामामितिवचने तत्वतो ज्ञात्वेत्युक्त्या ब्रह्मणि प्रवेशः ज्ञानसाध्यएवेति निश्चितम्, एतद्वाक्यसमन्विततया भक्त्या त्वनन्ययेति वाक्यार्थकरणे भक्तिकरणकत्वं ज्ञानदर्शनयोरेव सिद्ध्यति, प्रवेशस्तु अपरोक्षसाक्षात्कारात्मकज्ञानकरणक एवाभ्युपेयः तत्त्वतो ज्ञात्वेति स्पष्टभगवदुक्तेः। तथा च भक्त्येति तृतीयया करणत्वोक्तिस्तु ज्ञानदर्शनोऽभयसम्बद्धैव॥ यद्वा अनन्ययेति विशेषणस्वारस्येन अभेदसाक्षात्कारात्मकज्ञानानतिरिक्तैव भक्तिरत्रोच्यते इत्यभ्युपगमे श्रुतिस्मृत्यविरोधः सम्पद्यतेति नानुपपत्तिलेशोपि॥ अत एव श्रीमद्भगवत्पादैः गीताभाष्ये भक्त्यात्वनन्यया शक्य इत्यस्य व्याख्याने-कथं पुनः शक्य इत्युच्यते भक्त्येति। भक्त्या किंविशिष्टया इत्याह अनन्यया अपृथग्भूतया भगवतोऽन्यत्र पृथङ्ग कदाचिदपि भगवति सा त्वनन्या भक्तिः सर्वैरपि करणैः वासुदेवादन्यन्नोपलभ्यते यया सानन्या भक्तिः

तया भक्त्या शक्योऽहमेवंविधो विश्वरूपप्रकारो हेऽर्जुन ज्ञातुं शास्त्रतो न केवलं ज्ञातुं शास्त्रतो द्रष्टुं च साक्षात्कर्तुं तत्वेन तत्वतः प्रवेष्टुं च मोक्षं च गन्तुं परन्तप इत्युक्तम् । पुरुषः स परः पार्थेत्यस्यव्याख्यानेऽपि भगवत् पादैरुक्तम्-तल्लब्धेरुपाय उच्यते-पुरुष इति । पुरुषः पुरि शयनात् पूर्णत्वाद्वा स परः पार्थ परो निरतिशयो यस्मात् पुरुषान्न परं किंचित् स भक्त्यालभ्यस्तु ज्ञानलक्षणयाऽनन्यया आत्मविषयया इति । आनन्दगिरि-व्याख्यायां अपि-भक्तिर्भजनं सेवाप्रणामादिलक्षणां तां व्यावर्तयति-ज्ञानेति-इत्यनेन ननु ज्ञानायत्ता परमपुरुषप्राप्तिरुक्ता इत्यनेन च भाष्यव्याख्यानमेव समर्थितम् । भाष्यो-त्कर्षदीपिकाकारेणापि-अनन्यया न विद्यतेऽन्यो विषयोयस्यां तया आत्मविषययेति यावत् । भक्त्या ज्ञानलक्षणया उत्तमभक्त्या इत्युक्त्वा स्वाचार्यमतमेव समर्थितम् । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । इतिपद्यभाष्ये तथाभक्त्या मामभिजानातीति पद्यभाष्येपि भगवत्पादैः भक्तिः भजनं परां उत्तमां ज्ञानलक्षणां चतुर्थी लभते चतुर्विधा भजन्ते मां इत्युक्तम् । ततो ज्ञानलक्षणया भक्त्या मामभिजानाति यावानहमुपाधिकृत-विस्तरभेदोयश्चाहं विध्वस्तसर्वोपाधिभेदः उत्तमपुरुष आकाशकल्पः तं मामद्वैतं चैतन्य-मात्रैकरसं अजरममरमभयमनिधनं तत्वतोऽभिजानाति-इति कथनपूर्वकं पूर्वोक्ताया भक्तेः ज्ञानानतिरिक्तैव सविवरणं समर्थिता । गौडब्रह्मानन्दैः अपि लघुचन्द्रिकायां बृहन्नारदी-यादौ अधममध्यमभक्तावुक्त्वा विधिसिद्ध्यै भजेद्यस्तु दासवच्चक्रपाणिनम् । भक्तानां प्रवरोह्येष सर्वशास्त्रार्थकोविदः । इत्यनेनोत्तमभक्तमुक्त्वा-अहमेव परो विष्णुः मत्तः सर्व-मिदं जगत् । इति यः सततं पश्येत् तं विद्यादुत्तमोत्तमम्, इत्यनेन उत्तमोत्तमभक्तेः तत्व-साक्षात्काररूपत्वोक्तेः गीतायां च आर्तो जिज्ञासुरित्यादिना ज्ञानिनः चतुर्थभक्तत्वोक्त्या तथोक्तेः ज्ञानस्येव भक्तित्वेनाऽविरोधः । अन्ते तत्वभावादेव विश्वमायानिवृत्तिः नत्वन्या-पेक्षा इत्युक्तं तदभियुक्तोक्त्युपोद्बलकमेव । अन्यच्च आस्तिकदर्शनप्रवर्तकाचार्यबहु-मतिरपि ज्ञानमेव मुक्तिसाधनमिति समर्थयति । तथाहि कपिलगौतमपतंजलिकणादप्रभृ-तयो दर्शनप्रवर्तकाचार्याः महर्षयः प्रकारभेदमङ्गीकृत्याऽपि ज्ञानस्यैव मुक्तिसाधनत्वं स्थापयन्ति यथाप्रकृतिपुरुषान्यथाख्यातिः सांख्यदर्शने मुक्तिसाधिका, प्रमाणप्रमेय-संशयप्रयोजनादि षोडशपदार्थज्ञानं न्यायदर्शने मुक्तिसाधकं द्रव्यगुणादिषट्पदार्थज्ञानं वैशेषिकदर्शने अपवर्गसाधकं तस्मात् अनेकाचार्यसम्मतिरपि ज्ञानस्यैव मोक्षसाधनत्वपक्षं व्यवस्थापयति इति ज्ञानमेव मोक्षसाधकमङ्गीकार्यम् । किंच नहि ज्ञानेन सदृशं पवित्रमिह विद्यतेति गीतावचनमपि मोक्षसाधकत्वेन अविद्यासम्पर्कनिराकृतिरूपपूर्ण-पावित्र्यसम्पादकत्वं ज्ञानस्य व्यवस्थापयन् ज्ञानमेव परमपवित्रमिति निरूपयति तदपि ज्ञानातिरिक्तसाधनानां पावित्र्ये ज्ञानसादृश्यमपि निवारयन् प्रतिपादयति अतः एतद्वचने-नापि ज्ञानस्यैव मुक्तिसाधनत्वं दृढीक्रियते । उचितमप्येतत्, यतो अविद्यादिमलनिवृत्तिं विनापावनत्वपूर्तिः कथंचिदपि असम्भावितेति । अत्र इहशब्दार्थस्तु जगति मुक्तिसाधनेषु इति ग्राह्यः । गूढार्थदीपिकायां श्रीमधुसूदनसरस्वतीभिरुक्तं-नहि ज्ञानेन सदृशं पवित्रं पावनं शुद्धिकरमन्यदिह वेदे लोकव्यवहारे वा विद्यते ज्ञानभिन्नस्याज्ञानानिवर्तकत्वेन

समूलपापनिवर्तकत्वाभावात् कारणसद्भावेन पुनः पापोदयाच्च । ज्ञानेन तु अज्ञाननिवृत्त्या समूलपापनिवृत्तिरिति तत्सममन्यन्न विद्यतेति । श्रीधरस्वामिभिरप्युक्तं–पवित्रं शुद्धिकरं इहतपोयोगादिषु मध्ये ज्ञानतुल्यं नास्त्येवेति । आनन्दगिरिणाप्युक्तं पूर्वोक्तेन प्रकारेण ज्ञानमाहात्म्यं यतः सिद्धम् । अतस्तेन ज्ञानेन तुल्यं परिशुद्धिकरं परमपुरुषार्थौपयिकं इह व्यवहारभूमौनास्तीत्यर्थः । अपि च पुण्यपापात्मककर्मक्षये सति मुक्तिर्भवतीति सुप्रथितम् । ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेर्जुन इति भगवद्वचनेन पुण्यपापात्मककर्मक्षये सति मुक्तिरवश्यं भाव्यैव । किंच भक्तेः ज्ञानजनकत्वं श्रीमद्भागवतप्रथमस्कन्धे द्वितीयाध्यायेप्युच्यते वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥ तच्छ्रद्दधानाः मुनयो ज्ञानवैराग्ययुक्तया । पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया ॥ अत्रजनयत्याशु वैराग्यं ज्ञानमित्युक्त्या भक्तेः ज्ञानजननोपयोग एवदृश्यते । नन्वग्रिमपद्ये ज्ञानवैराग्ययुक्तया भक्त्या इत्युक्तेः भक्तेः ज्ञानसाहित्यमुच्यते नज्ञानजनकत्वं, यद्यत्रभक्तेः ज्ञानजननेतात्पर्यंस्यात् साहित्यंनोच्येत, ज्ञानरूपकार्योत्पत्तिप्राक्क्षणावच्छेदेन ज्ञानरूपकार्याधिकरणक्षणनियतपूर्ववृत्तित्वे सति ज्ञानजनकत्वमुपपद्येत, अत्र तु साहित्योक्त्या पूर्ववृत्तिता निरस्यतेतिचेत् श्रुणु यथात्र साहित्योक्तिः तथा पूर्वपद्येजनकत्वोक्तिः दृश्यते उभयोःसमन्वयंकृत्वैव तात्पर्यनिश्चयः कार्यः अन्यथा उभयवचनविरोध एव उपस्थितो भवेत् न समीहितार्थसिद्धिः । समन्वये विचार्यमाणे अवस्थाभेद एव अत्रसमन्वयं साधयिष्यति एवं चात्र प्रथमपद्ये यत् भक्तिद्वाराज्ञानजननमुक्तं तद्भक्तेः प्राथमिकीमवस्थामनुरुध्यैवोक्तं द्वितीयपद्ये यत्साहित्यमुच्यते तदुत्तमावस्थामनुसृत्यैवोच्यतेति ज्ञेयम् । अतएवात्रफलभेदोक्तिः तद्यथा प्रथमपद्येज्ञानवैराग्यजननफलोक्तिः उक्ता द्वितीयपद्ये आत्मदर्शनरूपं फलमुक्तम् । अथवा जनयत्याशु वैराग्यं इत्यात्र प्रथमावस्थापन्नभक्तेः सकाशात् यज्ज्ञानजननमुक्तं तत् परोक्षरूपमेव । एवंच ज्ञानवैराग्ययुक्तयेत्यत्रपरोक्षज्ञानसाहित्यमुक्त्वा भक्तेरपरोक्ष ज्ञानजनकता पश्यन्त्यात्मनिचात्मानं इत्यनेनोक्ता । एतदध्यायस्याग्रिमभागावलोकनेनापि अस्मत् प्रदर्शितरीत्यैवसमन्वितार्थसिद्धिः भवति । तथाहि अस्मिन्नेवाध्याये अग्रे शृण्वतांस्वकथां कृष्णः पुण्यश्रवणकीर्तनः । हृद्यन्तस्थोह्यभद्राणि विधुनोति सुहृत्सताम् । नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया । भगवत्युत्तमश्लोकेन भक्तिर्भवति नैष्ठिकी । तदारजस्तमोभावाः कामलोभादयश्चये । चेत एतैरनाविद्धं स्थितं सत्वेप्रसीददति । एवं प्रसन्नमनसो भगवद्भक्तियोगतः । भगवत्तत्वविज्ञानं मुक्तसङ्गस्यजायते । भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे । अस्मिन्सन्दर्भेशृण्वतां इत्यारभ्य नित्यं भागवतसेवयेत्यन्त भक्तेः प्राथमिकी अवस्थातत्कार्यं चोक्त्वा भक्तिर्भवतिनैष्ठिकीत्यारभ्य भगवत्तत्वविज्ञानमित्यन्तं भक्तेरुत्तमावस्था तत्कार्यं । चोच्यते । अग्रे च भिद्यते हृदयग्रन्थिः इत्यनेन भगवदपरोक्षज्ञानकार्यं निरूप्यते । एवं चात्र शृण्वतां स्वकथां इत्यारभ्य नित्यंभागवतसेवयेत्यन्तं चित्तशुद्धिपूर्वकं संशयभ्रमानास्कन्दितनिश्चितपरोक्षज्ञानसिद्धिरुक्तेति ज्ञेयम् । भगवत्युत्तमश्लोकेइत्यारभ्य मुक्तसङ्गस्य जायतेत्यन्तं भक्तेरुत्तमावस्था तत्फलं च भगवदपरोक्षज्ञानं उच्यतेति सुधीभिर्वि-

भावनीयम् । एवं श्रीभागवतेपि भक्तेः ज्ञानजनकत्वमेव दृश्यते न मोक्षप्रापकत्वम्, एवं च ज्ञानजननपरंपरयैव मोक्षसाधनताभक्तेः विज्ञेया । तृतीयस्कन्धेदेवस्तुतौ–पानेन ते देवकथासुधाया प्रवृद्धभक्त्या विशदाशया ये । वैराग्यसारं प्रतिलभ्य बोधं यथाञ्जसान्वीयुरकुण्ठधिष्ण्यम्–इत्यत्रापि प्रवृद्धभक्तेः वैराग्यसाररूपबोधसाधकत्वमेव व्यक्ततयोच्यमानं पूर्वस्थापितमेव सिद्धान्तमुपोद्बलयति । अत्र बोधस्य प्रवृद्धभक्तिलभ्यत्वोक्त्या अपरोक्षतैवाभ्युपेया । तृतीयस्कन्धे कपिलोपदेशप्रसङ्गेपि मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा । निःश्रेयसं स्वसस्थानं कैवल्याख्यं मदाश्रयम् । प्राप्नोतीहांजसा धीरः स्वदृशा च्छिन्नसंशयः । भक्त्या पुमान् जातविराग ऐन्द्रियादृष्टश्रुतान्मद्रचनानुचिन्तया । चित्तस्य यत्तो ग्रहणेयोगयुक्तो यतिष्यते ऋजुभिः योगमार्गैः । इति पद्ययुग्मेनापि पूर्वनिर्दिष्टस्यैव सिद्धान्तस्य समर्थनमुपलभ्यते । नन्वत्र मत्प्रसादेन कैवल्याख्यं निःश्रेयसमंजसा प्राप्नोति एवमेवान्वयो विधेयः तथा चात्रप्रसादस्यैवमोक्षसाधनत्वमुच्यतेनज्ञानस्येतिचेत्– हन्त एवमर्थकरणं अन्वयानवबोधनिबन्धनमेव । तथाहि अत्रमत्प्रसादेनेत्यस्य प्रतिबुद्धार्थेत्यनेनैवान्वितार्थत्वमुररीकार्यम्' तथाच एवमन्वयो भवति भूयसामत्प्रसादेन प्रतिबुद्धार्थः यदा मद्भक्तो भवति तदाकैवल्याख्यं निःश्रेयसं अंजसैवप्राप्नोति, मत्प्रसादेनेत्यस्य प्रतिबुद्धार्थेत्यनेनैवान्वितत्वे प्रतिबोधस्यैव मुक्तिसाधनत्वे च हेतुमाहुः स्वदृशाछिन्नसंशयइति । एवमन्वयकरणे तमेवं इत्यादि श्रुतिरपि समर्थिता भवति किंचश्रुतिसमर्थनेनान्वयस्यापि बलवत्ता । भक्त्यापुमानित्यत्र भक्त्यैव वैराग्योदयचित्तनिरोधकथनात् वैराग्यचित्तनिरोध अपरोक्षज्ञानपर्यवसायितैव भक्तेः अङ्गीकरणीया । एवं चैतत् पद्यद्वयेनापि ज्ञानस्य मुक्तिसाधनता भक्तेः वैराग्यादि जनकतैव सव्यक्तमुपपाद्यते । यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद्गुणकर्मजानि । तस्मिन् विशुद्ध उपलभ्यत आत्मतत्वं साक्षाद्यथामलदृशोः सवितृप्रकाशः । इति पिप्पलायनयोगेश्वरवचनमपि असत् प्रदर्शितवचनसमन्वयप्रक्रियानुकूलमेव । अत्र उरुभक्त्या इत्यनेन प्रवृद्धैव भक्तिरुक्ता उरुभक्त्यनन्तरभाविचित्तशुद्धिलभ्यत्वोक्तेः साक्षादित्युक्तेश्च अत्रापरोक्षदर्शनमेव विवक्षितमितिज्ञेयम् । इत्यच्युतांघ्रिं भजतोनुवृत्त्या भक्तिः विरक्तिः भगवत्प्रबोधः । भवन्ति वै भागवतस्य राजन् ततः परांशान्तिमुपैति साक्षात् । इति कवियोगेश्वरवचनमपि भक्तिः विरक्तिः भगवत्प्रबोधः इति शाब्दक्रमेणैव ज्ञानोद्भूतिं भक्त्यधीनां निरूपयन् पिप्पलायनवचनं समर्थयत्येव । अत्रापि प्रबोध इत्युक्त्या अपरोक्षज्ञानस्यैव विवक्षा ज्ञेया । ननु तृतीयस्कन्धे कपिलोपाख्याने–असेवयायं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृंभितेन । योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे । ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः । क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् । इति श्लोकद्वयेन ज्ञानवैराग्यभक्त्यादि समुच्चयस्यैव मुक्तिसाधनत्वप्रतिपादनात् ज्ञानस्यैव मुक्तिसाधनत्वोक्तिः श्रीकपिलवाक्यविरुद्धा ॥ तथाहि श्रीकपिलदेवैः वैराग्यविजृंभितेन ज्ञानेन प्रकृतिगुणानां असेवनमुक्त्वा योगेन भगवदर्पितयाभक्त्या प्रत्यगात्मरूपभगवत्प्राप्तिरूपा मुक्तिरुक्ता मुक्तौ प्राकृतबन्धनिवृत्तिः ब्रह्मप्राप्तिश्चेत्युभयं निष्पद्यते, तत्र वैराग्यविजृंभितं ज्ञानं प्राकृतबन्धनिवृत्तिं सम्पादयति

योगेन चित्तवृत्तिनिरोधेन भगवत्यर्पिता भगवद्भक्तिः ब्रह्मप्राप्तिं साधयतीति ज्ञानवैराग्यादिसमुच्चयस्यैवापवर्गसाधकत्वम्, असेवयेति वचनेन सुव्यक्ततया निरूप्यते । ज्ञानवैराग्येति वाक्येन प्राकृतबन्धनिवारकत्वेन शेषतया समुच्चितत्वं ज्ञानवैराग्ययोः निरूप्य अङ्गितया ब्रह्मप्रापकत्वं भक्तेरेवसुस्पष्टंप्रतिपाद्यते। भक्तियोगेन अकुतोभयं मे पादमूलं क्षेमाय प्रविशन्ति इति निरूपणात्। अत्र ज्ञानवैराग्ययोः विशेषणतया निर्देशः भक्तियोगस्य विशेष्यतयोक्तिश्च ज्ञानभक्त्योः अङ्गाङ्गिभावं सोत्साहंसाधयति। एवं च पूर्वोक्तकपिलवचनद्वयेन ज्ञानादिसमुच्चयस्यैव मुक्तिसाधनता निरूप्यते नज्ञानमात्रस्येति चेत्–भवेदेतदेवंयदि प्रवेशशब्दार्थौ मुख्यवृत्त्याभ्युपगम्येत, स्वात्माभिन्नस्वप्रकाश ब्रह्मात्मसाक्षात्काररूपता ब्रह्मलाभस्यास्माभिरङ्गीक्रियते तेन मुक्त्यव्यवहितक्षणपूर्ववृत्तित्वं ब्रह्मात्माऽपरोक्षसाक्षात्काररूपज्ञानस्यैव सिद्ध इति सिद्धं नः समीहितम्। प्रतिबिम्बवादिनां मते एतत्साक्षात्कारानन्तरमेव प्रतिबिम्बस्य बिम्बे प्रवेशउपचर्यतेति कृत्वा अवच्छेदवादिनांमतेपि अवच्छिन्नस्यशुद्धे प्रवेशः पूर्वनिर्दिष्टसाक्षात्कारानन्तरमेव उपचर्यतेति कृत्वा चात्रप्रवेशशब्दस्वारस्यमपि सुरक्षितं तिष्ठति। तथा च ज्ञानवैराग्ययुक्तेनेति श्लोकेन ज्ञानमात्रस्यैव मुक्तिसाधनत्वं प्रख्याप्यतेति विभावनीयम्। असेनयेत्यत्र प्रत्यगात्मानमिहावरुन्धेत्यनेनापि साक्षात्कारात्मकाऽपरोक्षज्ञानस्यैव साधनता दृढीक्रियतेति न कपिलवचनविरोधलेशगन्धोपि ज्ञानमात्रस्य मुक्तिसाधनत्वे इति सर्वं निरवद्यम्। तेनात्र समुच्चयस्यासाधनतायाऽवलोक्यते सा अपरोक्षज्ञानात्मकफलसाधनतयैवेति वैराग्यसमुच्चितं ज्ञानमपि मननोत्तरकालिकंपरोक्षज्ञानमेवाभ्युपेयम् । एतेन पूर्वनिर्दिष्टपद्यसमानार्थकपद्यानां–यथायथात्मापरिमुच्यतेऽसौ मत्पुण्यगाथा श्रवणाभिधानैः । तथा तथा पश्यति वस्तुसूक्ष्मं चक्षुर्यथैवांजनसंप्रयुक्तम्। संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भजतमाऽखिलसंशयाधिम्। एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः। विवृश्च्य जीवाशयमप्रमत्तः सम्पद्यचात्मानमथत्यजास्त्रम्–इत्यादीनामपिव्याख्यातता ज्ञेया सुधीभिरित्यलमतिविस्तरेण। अन्यच्च कपिलोपाख्याने–ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः । द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः। इतिपद्ये नैर्गुण्यो यो ज्ञानयोगःस एव नैर्गुण्यो भक्तियोगः द्वयोरप्येक एवार्थः अर्थात् अत्र ज्ञानयोगभक्तियोग इतियो शब्दभेदः सनवस्तुभेदसाधकः ( स न अर्थभेदसाधकः ) एतदुक्तं भवति अत्र शब्दभेद एवास्ति नार्थभेदः, शब्दभेदमङ्गीकृत्यैव द्वयोरित्युक्तं, एवं च अनेन वचनेनापि भक्तेः ज्ञानानतिरिक्ततैव साध्यतेति ज्ञानमात्रमेव मुक्तिसाधनमिति शास्त्रसिद्धम्। किंच एकादशस्कन्धे श्रीकृष्णोद्धवसंवादपरिसमाप्तौ फलश्रुतिरूपेण पद्यद्वयं भागवते समुपलभ्यते- तद्यथायएतदानन्दसमुद्रसंभृतं ज्ञानामृतं भागवताय भाषितम्। कृष्णेन योगेश्वरसेवितांघ्रिणा सच्छ्रद्धया सेव्य जगाद्विमुच्यते । भवभयमपहन्तुं ज्ञानविज्ञानसारं निगमकृदुपजह्रे भृङ्गवद्वेदसारम्। अमृतमुदधितश्चापाययत् भृत्यवर्गान् पुरुषमृषभमाद्यं कृष्णसंज्ञं नतोस्मि । उपन्यस्तवचनद्वयेनापि ज्ञानमेवमुक्तिसाधनमिति सिद्ध्यति । तथाहि अत्र भगवदुपदेशविशेषणतयोक्तं ज्ञानामृतं ज्ञानविज्ञानसारं इतिद्वयं सविशेषमस्मत

प्रदर्शितसिद्धान्तदार्ढ्यसम्पादकमवलोक्यते। मुक्तिरूपपरमफलप्रापकतया ज्ञानं विज्ञानं च यत्र साररूपेण उच्यते तद् ज्ञानविज्ञानसाररूपं भगवदुपदेशामृतं यद्वेदसाररूपमपि वर्तते तममृतं निगमाभिव्यंजकः यो भगवान् भृङ्गवत् वेदोदधितः स्वदिव्यज्ञानोदधितः वा स्वयमुपजहे किंच यः स्वभृत्यवर्गान् अपाययत् तं परमश्रेष्ठरूपं पुरुषं पुरुषोत्तमं भगवन्तं कृष्णसंज्ञं नतोस्मि। एवं चात्र प्रयुक्तेन ज्ञानविज्ञानसारमिति विशेषणेनापि ज्ञानस्यैव मुक्तिसाधनत्वं प्रतीयते। एतेन ज्ञानामृतमित्यपि व्याख्यातं ज्ञेयम्। अपरं च रुद्रगीतेपि–श्रेयसामिह सर्वेषां ज्ञानं निःश्रेयसं परम्। सुखं तरति दुष्पारं ज्ञाननौः व्यसनार्णवम्॥ अस्मिन्नपि श्लोके ज्ञानं निःश्रेयसं परमित्युक्त्या मुक्तिपरमसाधनता ज्ञानस्यैव निरणायि तेन श्रीरुद्रगीतप्रकरणमपि कर्मभक्त्योः मुख्यतया साक्षाच्च सानधत्वं प्रतिक्षिपन् ज्ञानस्यैव मुक्तिसाधनत्वं निश्चाययति।

तस्मात् ज्ञानमेव मुक्तिसाधनमिति प्राप्ते उच्यते–ज्ञानमेव मुख्यं साक्षाच्च मुक्तिसाधनमिति यत् प्रत्यपादि तत् किं श्रुतिसिद्धतया स्मृतिसिद्धतया उभयसमन्वयसिद्धतया वा। नाद्यः श्रुतिसिद्धता तु तमेवेत्यादि श्रुतिभिरेव वाच्या। तत्र तावत् ज्ञानादेव तु कैवल्यं ऋते ज्ञानादिति श्रुतिद्वयेनास्य सिद्धान्तस्य सिद्धिं ब्रूषे, तमेवेत्यादि श्रुतियुग्मेन वा, ब्रह्मविदाप्नोति परं–ब्रह्मवेद ब्रह्मैव भवति इति श्रौतवचनद्वयेन वा, तरति शोकमात्मवित् इति वचननेन वा, उपनिषत्सु सर्वत्र यो वेद यं एवं वेदेति उपसंहाराद्वा, उपनिषत्सु ब्रह्मप्रापकोपासनानां विद्येति नामनिर्देशाद्वा, उपनिषत्सु सर्वत्र शिष्यैः गुरुसमीपे ज्ञानोपदेशस्यैव प्रार्थितत्वाद्वा।

नाद्याद्यः ज्ञानादेव तु कैवल्यं इति श्रुतौ कैवल्यपदस्य प्रकृतिविविक्तात्मस्वरूपमात्रपरत्वात् नतेन वचनेन ज्ञानस्य ब्रह्मलाभरूपमुक्तिप्रापकत्वसिद्धिः। कैवल्यपदस्य तथैव तात्पर्यात्। नहि ब्रह्मलाभे कैवल्यं भवति किन्तु साहित्यमेव। ऋते ज्ञानादिति श्रुतेः अधिकारिभेदेन व्यवस्थापितत्वाच्च नाद्यद्वितीयः। तमेवेत्यादि उभयवचनयोः मुक्तिसाधनत्वेन कर्मभक्त्यादिप्रतिक्षेपपरतायाः लघुव्याख्याग्रन्थसमुच्चये कर्मयोगस्याप्यपवर्गसाधकतेति लेखे मया सुनिरस्तत्वात्। नाद्यतृतीयः ब्रह्मवित् ब्रह्मवेदेति वचनद्वयेन ज्ञानस्य मुक्तिसाधनत्वमात्रं लभ्यते नान्यप्रतिक्षेपः। तरतीति श्रुत्या शोकरूपबन्धनिवृत्तिं प्रति आत्मज्ञानस्य या साधनतोच्यते सापि अविद्यात्मकबन्धनिवृत्तिपर्यवसायिन्येव न परलाभपर्यवसायिनी। भक्तिलक्षणशरीरे माहात्म्यज्ञानस्य निविष्टतया भक्तिपूर्वकक्षापन्नं माहात्म्यज्ञानमेव यो वेद य एवं वेदेत्यनेन प्रकारेण उपक्रम्यते उपसंह्रियते च तेन नाद्यः पंचमः। विद्याशब्दस्य ज्ञानभक्तिसाधारणतया नविद्याशब्देनापि भवदीप्सितार्थसिद्धिः इति नाद्यषष्ठः। स्वरूपपरोक्षापरोक्षदर्शनं विना स्नेहाविर्भावस्य असंभावितया शिष्येण प्रथमं ज्ञानोपदेशस्यैव प्रार्थनीयत्वात् नाद्य सप्तमः। अथवा आद्यपंचमोत्तरमेव अत्राप्युत्तरम्।

न द्वितीयः। स्मृतिसिद्धता तु अस्य श्रीगीता श्रीभागवतादिवचनैरेव वक्तव्या, तत्र तावत् गीतावचनैः कथमेतत् सिद्ध्यतीति प्रथमतो विमृश्यम्। किं ज्ञानी त्वात्मैव मे नहि ज्ञानेन सदृशं ज्ञानाग्निरित्यादिवचनैरेतत् सिद्ध्यति, भक्त्या लभ्यस्त्वनन्यया-भक्त्या त्वनन्यया शक्य अहमेवं इति वचनयुग्मेन वा, भक्त्या मामभिजानातीति वाक्येन वा, ददामि बुद्धियोगं तं,-बुद्धौ शरणमन्विच्छ, दूरेण ह्यवरं कर्म बुद्धियोगात् इति वाक्यत्रयेण वा नद्वितीयतुरीयः। निर्दिष्टवचनद्वयेनापि कर्मापेक्षया एव ज्ञानस्य महत्वं प्रतिपाद्यते नभक्त्यपेक्षया। एतदपि कृत्वा चिन्तयोक्तम्। वस्तुतस्तु अत्र बुद्धिशब्देन क्वचित् ज्ञानं क्वचित् निष्कामबुद्धिः क्वचित् सिद्ध्यसिद्ध्योः समत्वबुद्धिरुच्यतेति एतत् प्रकरणस्थबुद्धिशब्दो नैकान्तेन ज्ञानपरः तेन न भवदीप्सितसिद्धिः। ददामि बुद्धियोगं तं इत्यत्र यो बुद्धिशब्दः तस्य ज्ञानपरता सम्भवेदपि किन्तु तद्वाक्यालोचनं अग्रे भविष्यति। नद्वितीयाद्यः नहि ज्ञानेन-ज्ञानाग्निरित्यादिवचनानि न भक्त्यनुत्कर्षसाधनपराणि किन्तु कर्मानुत्कर्षसाधनपराण्येव। प्रकरणस्थ उपक्रमोपसंहाराद्यालोचनेन तथैव तात्पर्यनिश्चयात्। ज्ञानी त्वात्मैव मे इति वचनं तु चतुर्विधा भजन्ते इत्युपक्रमानुरोधेन ज्ञानिभक्तपरमेव न केवलज्ञानिपरं, तुष्यत्विति न्यायेनाभ्युपेत्युक्त्या वचनं यदि केवलज्ञानिपरं स्वीक्रियते तथापि न तेन वचनेन भक्तानुत्कर्षसिद्धिः नैवात्मा च यथा भवान्-नाहमात्मानमाशासे इत्यादिवचनैः स्वात्मापेक्षयापि भक्ताधिक्यस्य स्वमुखेनैव कथनात् न कथमपि भक्तानुत्कर्षसिद्धिः। न द्वितीयतृतीयः। अत्र ज्ञात्वेत्यनेन न मुक्तिसाधनता ज्ञानस्य निरूप्यते किन्तु प्रवेशपूर्वकालिकतैव अपरोक्षदर्शनस्य प्रतिपाद्यते। भुक्त्वा व्रजतीतिवत् अन्यथा ज्ञातुं द्रष्टुं प्रवेष्टुं इत्यत्र ज्ञानदर्शनप्रवेशानां भक्तिकरणकत्वानुपपत्तिरिति भक्त्या इति तृतीया बाध्येत। किंच साधनविमर्शः मुक्तेः प्रचलति अपरोक्षदर्शनं तु फलमध्यपाति भवतीति न साधनविचारे अस्य वाक्यस्योपयोगः इत्यलमनुपयुक्तविचारेण। ज्ञात्वा विशतेत्यनेन ज्ञानस्य मुख्यतया मुक्तिसाधनतोच्यतेति पक्षस्याभ्युपेत्य स्वीकारेपि मुक्तिसाधननिरूपणशैलीभेद एव अधिकारिभेदं मार्गभेदं च साधयतीति भक्त्या मामभिजानाति इति वचनेनापि न सर्वाधिकारिपरत्वेन मुख्यतया ज्ञानस्यैव मुक्तिसाधनत्वं सिद्ध्यति। तथाहि यमधिकारिणं ज्ञानजननपरंपरया उद्धर्तुमिच्छति तं तथा मोचयति, यं केवलभक्त्या उद्धर्तुमिच्छति तं अनन्यभक्त्यैवोद्धरति। एवं अधिकारिभेदेनापि उभयवचनसाङ्गत्यं सुधीभिरवधेयम्। अयमधिकारिभेदः पुष्टिमर्यादादिमार्गभेदेनैव ज्ञेयः परस्परं मिश्रणेन। न द्वितीयद्वितीयः। भक्त्या त्वनन्यया-भक्त्या लभ्य इति वाक्ययोः त्वन्मतविरुद्धत्वात्। भक्त्येति वाक्यद्वये प्रयुक्तभक्तिशब्दस्य ज्ञानपरताया पूर्वपक्षिणोक्ता सा किं भक्तेः ज्ञानानतिरिक्तता शास्त्रसिद्धा इत्यतोक्ता-उत लोकप्रसिद्ध्या। न द्वितीयः लोकवेदप्रसिद्धेः सर्वथा त्वन्मतप्रतिकूलत्वात्। नहि लोकाः ज्ञानं भक्तिं च अभिन्नतया जानन्ति। ज्ञानभक्त्योरभिन्नता यदि लोकसिद्धा भवेत् ज्ञानभक्तिशब्दयोः पर्यायरूपतैव स्यात्। न हि शास्त्रे लोकेच पर्यायता अनयोः शब्दयोः प्रसिद्धा। व्याकरणानुसारेणापि विदधातुः ज्ञाधातुश्चाभिन्नार्थकः भजधातुश्च भिन्नार्थक एवोपलभ्यते। न हि घटं जानाति

इत्यस्य घटं भजति इत्यर्थो दृश्यते । न प्रथमः असिद्धे । तथाहि शास्त्रसिद्धतापि तमेवेत्यादिश्रुतिविरोधमुद्भाव्य विरोधे त्विति न्यायमुपयुज्य भक्तिशब्दं मुख्यार्थात् प्रच्याव्योच्यते, यद्वा भक्तिशब्दस्य शास्त्रे ज्ञानार्थकतायाः सिद्धतयोच्यते, उत चतुर्विधा भजन्ते मां इत्यत्र ज्ञानिपदप्रयोगादुच्यते, चतुर्विधा भजन्ते मां इत्यत्र ज्ञानिपदप्रयोगोपि भक्तेः ज्ञानानतिरिक्तत्वमभिप्रेत्य कृत उत अधिकृतभक्त्याधिकारि-विशेषणतया कृतः । नाद्यः । तमेवेत्यादि श्रुतेः विरोधस्य सर्वथा प्रशमितत्वात् नात्र विरोधे त्वितिन्यायस्य प्रसर अतो मुख्यार्थात् प्रच्यावनं प्रत्याशापि प्रशमितैव । न द्वितीयः । भक्तिशब्दस्य शास्त्रे ज्ञानार्थकताया असिद्धेः । यदि भक्तिशब्दस्य शास्त्रे ज्ञानार्थकत्वं भवेत् योगास्त्रय इति वचनं नोपपद्येत । सा परानुरक्तिरिति भक्तिसूत्रोक्ता व्याख्यापि नोपपद्येत । सुदृढः सर्वतोधिकः स्नेहो भक्तिरिति पांचरात्रोक्तलक्षणस्यापि वैयर्थ्यमेव भवेत् । यदि ज्ञानं भक्तिरेव स्यात् ज्ञाने कदाचिदपि अच्युतभाववर्जितता नोपलभ्येत, तथा च–नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम्–इति शुकोक्तेरपि व्यर्थता । श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । इत्युक्तिरपि जरद्गववाक्यतुल्या भवेत् । न ज्ञानं न च वैराग्यं इति नैरपेक्ष्यप्रदर्शनमपि अनुपपन्नतरं स्यात् । एवमनेकवचनानां अनुपपन्नता माभूदित्यर्थं भक्तिशब्दस्य ज्ञानार्थ-कता शास्त्रसिद्धा नास्तीति पक्ष एव उचिततरः । न तृतीयः । तात्पर्यानवबोधात् चतुर्विधा इत्यत्र प्रयुक्तो ज्ञानिपदः भक्तेर्ज्ञानाभिन्नत्वमेव साधयतु एतादृशराजाज्ञाया अभावात् अधिकारिविशेषणतयैवास्य शब्दस्य प्रयोग इत्येव पक्षः साधुरिति भाति । न ह्यधिकारिविशेषणतयोक्तं अधिकृताऽभिन्नत्वे पर्यवस्यति, अन्यथा तु आर्तता जिज्ञासुता अर्थार्थिता रूपापि भक्तिर्भवेत् । अत्र भक्त्यधिकारिविशेषणतयोक्तं ज्ञान्यादिपदसमूहं भक्त्यभिन्नत्वाभिप्रायेण यदि प्रयुक्तं स्यात् भवेत् ज्ञानलक्षणता भक्तेः तथा च आर्ततादि लक्षणरूपापि भक्तिर्भवेत् एवं च सर्वेषां रोगिणां अन्यप्रकारेणापि दुःखभाजां आपणस्था-र्थार्थिनां च अनायासेनैव भक्तिसिद्धिर्जातेति रुग्णालयादीनां च भक्तालयत्वं सम्पन्नमिति महदुपकृतं दुःखिनां अर्थार्थिनां रुग्णानां रुग्णालयादीनां चोपरिज्ञानपक्षपातिभिरित्यलं विस्तरेण । स्मृतिसिद्धता श्रीभागवतवचनैरपि भवतीति श्रीभागवतवचनावलोकनमपि आवश्यकम् । श्रीमद्भागवतेपि कुत्रचित् भक्त्या कुत्रचित् ज्ञानेन अन्यत्र समुच्चयेन मोक्ष-प्राप्तिः दृश्यते । ततो भवति सन्देहः शास्त्रे अपवर्गार्थं साधनानिश्चितता कस्मात् दृश्यतेति । एवं प्राप्ते विशेषालोचने समुच्चयदृष्ट्या, विकल्पदृष्ट्या मार्गभेदेन भिन्नाधिकारितया, सात्विकादिभेदभिन्नानां जीवानां भिन्नरुचितया वा, सात्विकतया एकप्रकारकत्वेपि निर्वि-ण्णत्वादिभेदभिन्नानां भिन्नरुचितया वा, मुक्तितारतम्येन विभिन्नसाधनपरिग्रहस्यावश्यक-तया वा, किमर्थं विभिन्नरीत्या साधनोक्तिः मुक्तेरिति भवति चिन्ता । तत्र नायं सुखापो भगवान् देहिनां गोपिकासुतः । ज्ञानिनां चात्मपोतानां यथा भक्तिमतामिह ॥ केवलेन हि भावेन गोप्यो गावः खगा मृगाः । येन्ये मूढधियो नागाः सिद्धा मामीयुरंजसा । भक्त्या-हमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् । प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥

इत्यादि वाक्यानि केवलभक्त्यैव मोक्षं प्रदर्शयन्ति । वैराग्यसारं प्रतिलभ्य बोधं यथांजसान्वीयुरकुण्ठधिष्ण्यम् । विद्याकुठारेण शितेन धीरः । विवृश्च्य जीवाशयमप्रमत्तः सम्पद्य चात्मानमथ त्यजास्त्रम् । स तत्र निर्मुक्तसमस्तसङ्ग आत्मानुभूत्या विधुतत्रिलिङ्गः । परेमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः । तस्मान्नरोऽसङ्गसुसङ्गजातज्ञानासिनैवेह विवृक्णमोहः । रहूगणत्वमपि ह्यध्वनोस्य सन्यस्तदण्डः कृतभूतमैत्रः । असज्जितात्मा हरिसेवयाशितं ज्ञानासिमादाय तरातिपारम् । इत्यादिवचनानि ज्ञानेन मुक्तिं प्रदर्शयन्ति । ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः । क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् । असेवयायं प्रकृतेर्गुणानां ज्ञानेन वैराग्यविजृम्भितेन । योगेन मय्यर्पितया च भक्त्या मां प्रत्यगात्मानमिहावरुन्धे । अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना । तीव्रया मयि भक्त्या च श्रुतसंभृतयाचिरम् । ज्ञानेन दृष्टतत्वेन वैराग्येण बलीयसा । तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना । प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् । तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः । भुक्तभोगा परित्यक्ता दृष्टदोषा च नित्यशः । नेश्वरस्याशुभं धत्ते स्वेमहिम्नि स्थितस्य च । यथा ह्यप्रतिबुद्धस्य प्रस्वापो बह्वनर्थभृत् । स एष प्रतिबुद्धस्य नवै मोहाय कल्पते । एवं विदिततत्वस्य प्रकृतिर्मयि मानसम् । युञ्जतो नापकुरुते आत्मारामस्य कर्हिचित् । यदेवमध्यात्मरतः कालेन बहुजन्मना । सर्वत्रजातवैराग्यो आब्रह्मभवनान्मुनिः ॥ मद्भक्तः प्रतिबुद्धार्थो मत्प्रसादेन भूयसा । निःश्रेयसं स्वसंस्थानं कैवल्याख्यं मदाश्रयम् । प्राप्नोतीहांजसा धीरः स्वदृशाच्छिन्नसंशयः । यद्गत्वा न निवर्तेत योगी लिङ्गाद्विनिर्गमे । इत्यादीनि वचनानि ज्ञानवैराग्ययोगभक्तिप्रसादादिसमुच्चयेन मुक्तिं प्रतिपादयन्ति । समुच्चयोपि क्वचित् भक्त्यङ्गतया ज्ञानादीनां दृश्यते यथा ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः । क्षेमाय पादमूलं मे प्रविशन्तीति वाक्ये । क्वचित् अङ्गाङ्गिभावविरहितोपि समुच्चयः दृश्यते तद्यथा अनिमित्तनिमित्तेनेत्यारभ्य यद्गत्वा न निवर्तेत योगी लिङ्गाद्विनिर्गमे इत्यन्तम् । क्वचित् ज्ञानजननपरंपरया भक्तेः मुक्तिसाधनता श्रीभागवते ततो मां तत्वतो ज्ञात्वेति वत् दृश्यते तद्यथा वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् । एवं प्रसन्नमनसो भगवद्भक्तियोगतः । भगवत्तत्वविज्ञानं इत्यारभ्य दृष्ट एवात्मनीश्वरे इत्यन्तम् । क्वचित् शास्त्रजन्यदृढनिश्चितपरोक्षज्ञानस्य अङ्गाङ्गिभावप्रदर्शनपूर्वकं भक्तेः अपरोक्षसाक्षात्कारात्मकज्ञानजननपरंपरया मुक्तिसाधनता दृश्यते । एतत् पक्षद्वये मुख्यसाधनता ज्ञानस्यैव मुक्त्यर्थं सिद्ध्यति । क्वचित् अङ्गाङ्गिभावमन्तरा ज्ञानजननपरम्परामन्तरा च त्रिकसमुच्चयस्य साधनता बोध्यते–यथा भक्तिः परेशानुभवो विरक्तिः अन्यत्र चैषत्रिक एककालः । प्रपद्यमानस्य यथाश्नतः स्युः तुष्टिः पुष्टिः क्षुदपायोनुघासम् । इत्यच्युताङ्घ्रिं भजतोनुवृत्त्या भक्तिः विरक्तिः भगवत्प्रबोधः । भवन्ति वै भागवतस्य राजन् ततः परां शान्तिमुपैति साक्षात् । इत्यत्र । क्वचिच्च भक्तेः ज्ञाननैरपेक्ष्यमप्युच्यते यथा–तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह । यत्कर्मभिः यत्तपसा ज्ञानवैराग्यतश्च यत् । योगेन दानधर्मेण श्रेयोभिरितरैरपि । सर्वं मद्भक्तियोगेन मद्भक्तो लभतेंजसा । स्वर्गापवर्गं मद्धाम कथंचित् यदि

वांच्छति इत्यत्र । नन्वत्र यदुक्तम्—क्वचित् अङ्गाङ्गिभावविरहितोपि ज्ञानवैराग्ययोग-भक्तिप्रसादादि मुक्तिसाधनसमुच्चयः दृश्यते तद्यथा अनिमित्तनिमित्तेनेत्यारभ्य यद्गत्वा न तिवर्तेत योगी लिङ्गाद्विनिर्गमे इत्यन्तम् इति। तच्चिन्त्यम् । नह्यत्र मुक्तिसाधनतया ज्ञान-भक्त्यादि समुच्चयः प्रतिपाद्यते । अपि तु अपरोक्षब्रह्मसाक्षात्कारसाधनतयैव ज्ञानादि समुच्चयोत्र प्रतिपादितः, तथा चात्र प्रतिबुद्धार्थ इत्यनेन अपरोक्षब्रह्मसाक्षात्कारात्मक-ज्ञानस्यैव मुक्तिसाधनतयोक्तिरुच्यते इति चेत्-न अत्रापि ततो मां तत्त्वतो ज्ञात्वेति वत् प्रतिबुद्धार्थ इत्यनेन कैवल्यप्राप्तिपूर्वकालिकतैव अपरोक्षसाक्षात्कारस्योच्यते न साधनता अन्यथा अनिमित्तनिमित्तेनेत्यारभ्य मत्प्रसादेनेत्यन्तं तृतीया श्रुतिभिरुक्तं करणत्वं बाध्येत। एवं चात्र ज्ञानादिसमुच्चयस्यैव मुक्तिसाधनतया प्रतिपादनं तृतीयाश्रुतिभिः क्रियतेति मन्तव्यम् । इयमेव व्यवस्था—पानेन ते देव कथासुधाया इति पद्ये प्रतिलभ्य बोधं इत्यत्रापि । तत्रापि कथासुधापानसमुच्चितस्नेहस्यैवासाधनत्वोक्तिः पानेन इति तृतीयया भक्त्या इति तृतीयया चोक्ता एवं विभिन्न विभिन्नस्थलेषूक्तः साधननिरूपणशैलीप्रभेद एव अधिकारिभेदमनुमापयति किंचाधिकारिभेदेनैव व्यवस्था विधेयेति सूचयति । समुच्चय-पक्षेपि अन्ततो गत्वा अधिकारिभेदमनुसरणमन्तरा गतिरोध एव भवतीति अधिकारि-भेदमनुसृत्यैव व्यवस्था विधेया । तथा हि यदि समुच्चयपक्षेपि एकप्रकारकतोपलभ्येत समुच्चयस्य व्यवस्थापकत्वं अधिकारिभेदमन्तरापि सम्भवेत् किन्तु समुच्चयस्यापि भिन्न-भिन्नरीत्या निरूपणमुपलभ्यतेति न समुच्चयमात्रेणापि निर्वाहः सम्भवति इति अन्ततोगत्वा अधिकारिभेदोऽनुसर्तव्य एव, विभिन्नविभिन्नरीत्या चोक्त्या निरूपितस्य समुच्चयस्य अधिकारिभेदमन्तरा निरूपणाऽसम्भवात् । एवंच तद्धेतोरेवास्तु किंतेनेति न्यायेन अधिकारिभेदेनैव व्यवस्था भवतीति अधिकारिभेदमनुसृत्यैव समाधानं कार्यम् इति निष्कण्टकः पन्थाः । विकल्पस्यापि अत्र व्यवस्थापकत्वमसम्भवदुक्तिकं फलभेदोपलब्धेः । यदि भक्तिज्ञानादेः फलैक्यमुपलभ्येत विकल्पस्यापि वचनव्यवस्थापकता सम्भाव्येत किन्तु केवलज्ञानस्य केवलभक्तेः भक्तिज्ञानसमुच्चयस्य ज्ञानभक्तिसमुच्चयस्य च शास्त्रे दृश्यमाना फलभेदोपलब्धिरेव पूर्वोक्तवचनव्यवस्थापकतया विकल्पावसरमपि निवारय-तीति न विकल्पेनापि निर्वाहः । यत्तूक्तं निर्विण्णत्वादि भेदभिन्नानां भिन्नरुचितया वा शास्त्रे साधननिरूपणशैलीभेदः दृश्यत इति तदपि वाक्यानालोचनमूलकमेव । तथाहि निर्विण्णानां ज्ञानयोगः कर्मयोगस्तु कामिनाम् । न निर्विण्णो नातिसक्तो भक्तियोगोस्य सिद्धिदः । इति । वचनबलेन यदि निर्विण्णत्वादिभेदभिन्नाधिकारिणां यदि भक्त्यादि-मार्गेधिकृतत्वं उच्यते तथाप्येवं सर्वेषां कर्ममार्गाधिकारिणां सर्वेषां ज्ञानमार्गाधि-कारिणां सर्वेषां भक्तिमार्गाधिकारिणां च नानेन वचनेन संग्रहः सम्भवति भगवतैव निष्कामकर्मयोगस्य भगवद्गीतायां प्रतिपादनात्, ता नाविदन्निति पद्ये परमोच्चवैराग्यस्य भक्तिमार्गीयेषु कथनाच्च । अतः शुद्धमिश्रादिप्रकारकपुष्टिमर्यादादिकर्मज्ञानादिमार्गभेद-मूलकाधिकारिभेदेनैव सर्ववचनव्यवस्थितिर्भवतीति मन्तव्यं सुधीभिः, इत्यलम् । न तृतीयः। तथाहि उभयसमन्वयसिद्धता तु श्रुतिगीताभागवतादिवचनैः अविसंवादितया ऐक-

कण्ठ्येन ज्ञानमात्रस्य मुक्तिसाधनत्वप्रतिपादनादेव निरूप्या। तत्र तावत् वचनानामविसंवादिता कथं सम्पादिता इत्येतावदेव परीक्षणीयम्। किं श्रुतिगीतादिवचनानां सुस्पष्टं विरुद्धतया प्रतीयमानानां विरोधमुद्भाव्य विरोधेत्विति न्यायमुपयुज्य गीतादिवचनस्थभक्त्यादिशब्दानां अमुख्यार्थं अन्यथार्थं च परिकल्प्य समन्वयः साध्यते (१) अथवा गीतादिवचनैरेव भक्त्यादिशब्दानां अन्यपरत्वं क्लृप्तं इति कृत्वा समन्वयः साध्यते (२) यद्वा शास्त्रे मुक्तिसाधनतया भक्त्युक्तेः ज्ञानजननपरम्परयैव साधनत्वे तात्पर्यात् समन्वयः साध्यते (३) यद्वा अयोग्य अशक्त अविद्वधिकारितां प्रदर्श्य समन्वयः साध्यते (४) अथवा समुच्चये विकल्पे वा तात्पर्यप्रक्लृप्त्या समन्वयः साध्यते (५) अथवा मार्गभेदेन अङ्गीकृतानां अधिकारिणां भिन्नतया अधिकारिभेदेन उभयवचनसङ्गत्या समन्वयः साध्यते (६) मार्गभेदभिन्नाधिकारिभेदेन समन्वयसाधनपक्षेपि ज्ञाने महत्त्वमङ्गीकृत्य किंवा भक्त्युत्कर्षमभ्युपेत्य समन्वयः साध्यते (७) न तृतीयद्वितीयः। गीतादिवचनैरेव गीतास्थभक्तिशब्दस्य ज्ञानपरत्वं क्लृप्तं इति पक्षस्य स्मृतिसिद्धतयेति प्रधानद्वितीयविकल्पनिरसनावसरे मया सुनिरस्तत्वात्। तृतीयतृतीयविकल्पस्यापि तत्रैव मया सुनिरस्तत्वात् अग्रे निराकरिष्यमाणत्वाच्च। अयोग्याद्यधिकारकत्वमेव भक्तियोगस्यैतादृशनियमस्य शास्त्रेऽनुपलब्धेः न तृतीयतुरीयः। भक्त्या त्वनन्ययेति वचने ज्ञानदर्शनप्रवेशानां भक्तिकरणकत्वस्य व्यक्ततयोक्तेः समुच्चयविकल्पयोरसंभवदुक्तिकत्वात् न तृतीयपंचमः। तृतीयषष्ठविकल्पस्य सिद्धान्तसम्मतत्वात् नात्र निरासः क्रियते। सप्तमविकल्पोपि भक्त्यपेक्षया ज्ञानमहत्त्वांशपरित्यागेन सिद्धान्तानतिरिक्त एव भवतीति न तस्यापि निराकृतिः। न तृतीयाद्यः। वास्तविकविरोधाभावात्। तथा हि ईश्वरविचारजीवविचारयोः परस्परं विरोधसम्भवेपि ईश्वरकर्तृकोभयविचारयोःपरस्परं विरोधलेशस्याप्यभावात्। नहि वेदान्तकृद्भिन्नः गीताकृत् येन तत्र विरोधलेशसम्भावनापि प्राप्तावसरा भवेत्। न वा वेदान्तकृद्भिन्नः श्रीभागवतकृत् तस्यैव साक्षात् ज्ञानावताररूपत्वात्। भवदीयग्रन्थेष्वपि तस्य ज्ञानावतारत्वस्य व्यक्ततयाऽभ्युपगमः दृश्यते। यो वेदान्तकृत् गीताकृद्भगवान् यश्च ज्ञानशक्त्यवताररूपः श्रीभागवतमहाभारतकृत् व्यासः स वेदान्तार्थं न जानाति तत्पश्चाद्भाविनः तदीयग्रन्थव्याख्यातारः तच्छिष्यकोटिनिविष्टाः वेदार्थं वेदान्तार्थं गीतार्थं च जानन्तीति कल्पनाया अपि मूर्खविचारणारूपत्वात्। अत्रैतावदेव तावत् परीक्षणीयम्। मुक्तिः ब्रह्मप्राप्तिश्च वेदान्तिमते भिन्ना अभिन्ना वा यद्यभिन्ना तर्हि अतिमृत्युमेति इत्यत्र यथा अतिमृत्युपदेन मुक्तेरुक्तिः तथैव यमेवैष वृणुते तेन लभ्य इत्यत्रापि मुक्तिरेवोच्यतेति अङ्गीकार्यम्। ब्रह्मविदाप्नोति परं ब्रह्मवेद ब्रह्मैव भवति इत्यत्रापि मुक्तिकथैव प्रचलतीति ज्ञेयम्। किन्तु तमेव यमेवेत्यादिवचनानां इतरनिषेधपूर्वकं मुक्तिसाधननिश्चायकत्वेन निराकांक्षतया प्राबल्यं सन्दिग्धतादि दोषरहितत्वात्, न तथा ब्रह्मविदिति वाक्यद्वयस्य प्राबल्यमभ्युपेयम्, अज्ञाधिकारिणां तत्र सन्देहोपस्थितेः सम्भावितत्वाच्च। तमेवेत्यादिवचनानां तु इतरव्यावर्तनपूर्वकं निश्चितसाधनरूपनिरूपकतया सर्वथा निस्सन्दिग्धत्वात् विशेषतो बलीयस्त्वम्। तेन प्रबलवचनद्वयविरोध-

प्रशमने न आपाततो सन्दिग्धानां निर्णायकत्वं सम्भवति। अतो विरोधस्थैर्यास्थैर्य-परीक्षा प्रबलवाक्ययोरेव कार्या सा त्वस्माभिः लघुव्याख्याग्रन्थसमुच्चये पूर्वप्रतिपादित-प्रकारविषयातिरिक्तप्रकारविषयनिषेधपरता नान्येति निषेधस्याभ्युपगम्य कृता इत्यलं प्रसक्तानुप्रसक्त्या।

ननु लघुव्याख्याग्रन्थोक्त उभयश्रुतिविरोधपरिहारस्य अनुपपन्नतया अनौचित्यमिति चेत्-कथमनुपपन्नत्वं तत्प्रकाशयतु भवान्-किं नान्येति निषेधस्य कर्मभक्तिमार्गपरत्वे स्वारस्यात् प्रकारविषयपरत्वे अनुपपन्नयाऽनौचित्यं-उत विदित्वेति पदेन सुस्पष्टं वेद-नोक्त्या उपलक्षणविधया साधनत्वेनोपलक्षितयोः कर्मभक्तिमार्गयोः ग्रहणमुचित-तरमिति वाऽनौचित्यं-पन्थापदस्वारस्येन कर्मभक्तिमार्गयोर्ग्रहणमुचितमिति वाऽनौ-चित्यं-नान्येति निषेधस्य कर्मभक्तिमार्गपरत्वे स्वारस्यमपि स्वमतसंरक्षणदृष्ट्याङ्गीकृतम्। यद्वा सर्वश्रुत्यविरोध एवं स्वारस्यकल्पन एव भवति इत्यङ्गीकृतम्, उत तमेवेति श्रुतौ एवकारस्य विदित्वेत्यनेनान्वयमभ्युपेत्याङ्गीक्रियते नाद्य तृतीयः। प्रथमोपस्थितपदान्वयं परित्यज्य अप्रथमोपस्थितपदान्वयपरिग्रहे मानाभावात्। कुत्रचित् एवं दर्शनेपि अगत्यैव तथान्वयावलम्बनस्य दृष्टत्वान्नात्र अप्रथमोपस्थितान्वयो विधेयः। नन्वत्रापि अगतिरिति चेत् कथमगतिः किं स्वकल्पनयैव अगतिः प्रत्यक्षविरोधेन तर्कविरोधेन श्रुतिविरोधेन वा प्रत्यक्षतर्कोभयविरोधस्यात्रानवसरपराहततया कृतमत्राप्रसक्तचिन्तया। भवन्मतसंरक्षणार्थं भवदीयकल्पनाया अकिंचित्करत्वात् यमेवेति श्रुतिविरोधस्य अप्रथमो-पस्थितान्वयपक्ष एव संभावितत्वात् न प्रथमोपस्थितान्वयपक्षे श्रुतिविरोधलेशसम्भाव-नाऽपि। ननु विशेषणक्रिययोर्मध्ये क्रियाया एव प्राधान्यात् तत्रैवान्वयकरणे औचित्य-मिति चेत् न एवमन्वयकरणे अनेकश्रुतिस्मृतिवचनविरोध आयातीति क्रियान्वयपक्ष-स्यात्र सर्वथा हेयत्वात्। एवमनेकश्रुतिविरोधप्रदर्शनेन आद्यद्वितीयविकल्पोपि निरस्तः। आद्यप्रथमविकल्पस्य अकिंचित्करत्वात् निरसनमप्यनावश्यकम्। न द्वितीयः। साधनत्वोपलक्षितयोः कर्मभक्त्योर्ग्रहणमपि उपलक्षणविधया तदैव संभावितं यद्यत्र एवकारादिरहिता वेदनोक्तिर्भवेत्, अत्र तु एवकारादिसहितैव विदित्वेत्यनेन वेदनोक्तिः, इति विदित्वेत्यनेन उपलक्षणविधया प्राप्तोपलक्षितयोर्ग्रहणात् प्रागेव प्रथमोपस्थितत-मित्यनेनान्वित एवकारेण विषयसमर्पणात् नान्येति निषेधेन तादृशविषयातिरिक्त-विषयनिषेध एव प्रतिपाद्यतेति पक्षस्यैवौचित्यम्। इयमेव व्यवस्था तमेवं विद्वा-नित्यत्रापि ज्ञेया। अतो न द्वितीयः पक्षोऽप्युपपन्नः पन्थापदव्याख्यानमपि एवकारादि-समर्पितार्थाऽविरुद्धतयैव कार्यम्। इति न तृतीयः। यत्तु महेश्वरानन्दः प्राह—एवं केचन केवलभक्तिप्रशंसकाः आत्मैक्यज्ञानं नाद्रियन्ते ते च स्वप्रशस्तां परां भक्तिमेव अवमानयन्ति यतः तदैक्यज्ञानमन्तरेण परा भक्तेरसंभवात्। ज्ञानप्रशंसकानि तमेव विदित्वा ज्ञानादेव तु कैवल्यम्-ऋते ज्ञानान्न मुक्तिः-तरति शोकमात्मवित्-नानुशो-चन्ति-ज्ञानं निःश्रेयसार्थाय पुरुषस्यात्मदर्शनम्। यदाहुर्वर्णये तत्ते हृदयग्रन्थिभेदनम्। अनन्यदृष्ट्या भजतां गुहाशयः स्वयं विधत्ते स्वगतिं परः पराम्। ज्ञानेनानाशयत् क्षत्ता

शोकमुत्पतितुं बुधः। इत्यादीनि श्रद्धास्पदानि शास्त्रवचांसि तिरस्कुर्वन्ति। लोकेपि साक्षात्कारात्मकज्ञानस्य माहात्म्यं प्रसिद्धमेतत्। तथाहि दूरस्थे पतिपत्नीपुत्रादौ प्रेम्णः प्रकृष्टत्वेपि तत्साक्षात्काराभावेन पूर्णतया नानन्दाभिव्यक्तिर्भवति। प्रत्युत वियोगाद्धेतोः हृदयेतीव व्याकुलतादुःखरूपा सम्पद्यते। अत एव तत्र प्रकृष्टप्रेमवत् पूर्णानन्दाभिव्यक्तये साक्षात्कारात्मकं ज्ञानमपेक्ष्यते लौकिकैः। तथैव प्रकृते भगवदात्मतत्त्वेपि यथाधिकारी-परमं प्रेमाणं सम्पादयति तथाऽपरोक्षं ज्ञानमपि सति चैवं भक्तेः ज्ञानस्य च समप्रधानता तयोः तादात्म्यसिद्धये शास्त्रैः प्रतिपाद्यते। अत एव ज्ञानिनो भगवदात्मत्वं एकभक्तित्वं च गीतासु ज्ञानी त्वात्मैव मे मतम्। तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते। इत्यादिना प्रतिपादितं सङ्गच्छते। एतेन तयोः पराभक्तिसाक्षात्कारात्मकज्ञानयोः चोत्कर्षापकर्षत्वं निरस्तम्।

यत्र च शास्त्रवचने ज्ञानापेक्षया भक्तेरुत्कर्षः प्रतिपादितः तत्र ज्ञानं परोक्षं भक्तिश्च परा फलात्मिका वेदितव्याः। यतः परोक्षज्ञानात् परा भक्तेरस्ति श्रैष्ठ्यं निर्विवादम्। एवं यत्र भक्त्यपेक्षया ज्ञानस्योत्कर्षः प्रतिपादितः तत्र भक्तिः श्रवणादिसाधनरूपानां च तत्फलात्मकं अपरोक्षं प्रत्येतव्यम्। यतः साधनभक्तेः अपरोक्षाद्वयज्ञानस्य श्रैष्ठ्यस्य सर्वसम्मतत्वात्। अत एव साधनभक्त्या पराभक्तिमयस्य साक्षात्कारात्मकज्ञानस्य समुद्भूतत्वं भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम्। न युज्यमानया भक्त्या भगवत्यखिलात्मनि। सदृशोस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये। आराध्य भक्त्या लभतामलं तज्ज्ञानं यतो ब्रह्मपरं विदन्ति। इत्यादीनि वचांसि समादरेण प्रतिपादयन्ति। ब्रह्मसिद्धये ब्रह्मणोऽद्वयस्य अपरोक्षात्मकज्ञानस्य सिद्धये भगवति प्रयुज्यमाना भक्तिरेव कल्याणमयो मार्गः नास्ति तत् सदृशोन्य इत्यर्थः। अनेन कर्मादेः व्यतिरेकः सूच्यते न तु ज्ञानस्य। सति चैवं तमेव विदित्वेति श्रुतिपुराणवाक्ययोरेकार्थता समर्थिता भवति तयोः तादात्म्यापत्तिरप्यर्थतः।

यद्यपि सर्वस्याप्यस्ति निजात्मनि परमप्रेमा स्वतः सिद्धः तथापि सः कामादिभिः प्रतिच्छन्नतया न स्फुटमवभासते। अतस्तस्य स्फुटावभासाय वैराग्यादिसाधनैः तत्प्रति-रोधापनोदनं विधीयते मुमुक्षुभिः। तथापि सस्फुटावभासितोपि परमप्रेमा यावत् परमा-त्मना सहैक्यज्ञानं न जायते तावत् तस्य परिच्छिन्नविषयतयाऽपरिच्छिन्ने परमात्मनि संयो-जयितुमशक्यत्वात् परमपुरुषार्थता न सिद्ध्यति। यदा च तत्त्वबोधात् अहं ब्रह्मास्मि-तत्त्वमसि-अहं भवान् न चान्यस्त्वं त्वमेवाहं न संशयः। आत्मानं चिन्तयेदेकं अभेदेन मया मुनिः। इत्यादिरूपः अभेदात्मकः साक्षात्कारः प्रादुर्भवति तदा सपरमप्रेमा परिच्छिन्नविषयतां विहाय अपरिच्छिन्नपरात्मविषयकः सुतरां सम्पद्यते। अत एवाऽभेद-ज्ञानिनः परमात्मनि अपरिच्छिन्नो महान् प्रेमा एकभक्तिर्विशिष्यते, ब्रह्मभूतः प्रसन्नात्मा परां भक्तिं लभते इत्यादिभिः शास्त्रवचनैः प्रतिपादितः सङ्गच्छते।

एवं श्रवणादिभिः साधनैः यस्य कठिनं हृदयं द्रुतं पूतं च भवति तस्मिन् ज्ञानस्वरूपो भगवान् स्वतः समंकितस्सन् चकास्ते। तदुक्तं भक्तिरसायने मधुसूदनस्वामिपादैः

चित्तद्रव्यं तु जतुवत् स्वभावात् कठिनात्मकम्। तापकैर्विषयैर्योगैर्द्रवत्वं प्रतिपद्यते ॥ ततो भक्तिमान् भगवत् प्रियः स तादृशो हृदि निहितं भगवत् स्वरूपं विश्वस्य समस्तेषु चराचरपदार्थेषु समवलोकते । यदाहुः श्रुतिस्मृतिपुराणवादाः सर्वं खल्विदं ब्रह्म–वासुदेवः सर्वमिति–सकलमिदमहं च वासुदेवः–अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततो–सर्वभूतेषु यः पश्येत् भगवद्भावं इत्याद्याः । अत एवं ज्ञानं चिन्मात्रं प्रेमाप्यानन्दमात्रं प्रतिपादयन्तो विद्वांसः तयोरेकत्वमेव समर्थयन्ति । सति चैवं भक्तिपथानुयायिनः पराया भक्तेः स्वयं फलरूपतेति ब्रह्मकुमाराः (ना. भ. सू.) 'नवरसमिलितं वा केवलं वा पुमर्थं परममिह मुकुन्दे भक्तियोगं वदन्ति । (भ. रसा.) इत्यादिभिः फलरूपतां परमपुरुषार्थरूपतां च प्रतिपादयन्ति । ज्ञानपथानुयायिनश्च 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते । सर्वं ज्ञानप्लवेनैव वृजिनं' 'ज्ञानं परं मन्महिमावभासं यत्सूरयो भागवतं वदन्ति, इत्यादिभिः तत्त्वज्ञानस्य फलरूपत्वं परमपुमर्थत्वं च निरूपयन्ति समदर्शिनस्तु तयोर्विवादं विरोधं च निवारयितुं तेषां समेषां ज्ञानभक्तिमहत्वप्रतिपादकवाक्यानां समन्वयं तु तयोरेकत्वमत्यादरेण=सांख्ययोगौ पृथक् बालाः प्रवदन्ति=द्वयोरप्येक एवार्थ=इत्यादिभिः प्रमाणयन्ति । तथा च सत्सङ्गश्रवणकीर्तनादिभिः अपरा भक्तिः प्रादुर्भवति तया च चेतसो नैर्मल्यं निर्मले च तस्मिन् दृढवैराग्यद्वारा परा भक्तिमयं सद्गुरुप्रसादात् तत्वदर्शनमाविर्भवति तेन च विष्णोरच्युतस्य परमपदस्याधिगतिः,–इति यथार्थक्रमं प्रदर्शयितुमाह -पानेन ते देव कथासुधाया प्रवृद्धभक्त्या विशदाशया ये । वैराग्यसारं प्रतिलभ्य बोधं यथांजसान्वीयुरकुण्ठधिष्ण्यम् ॥ देवा भगवन्तं स्तुवन्ति–हे देव ! चराचरेस्मिन् जगति चैतन्यानन्दात्मना द्योतमान स्वयंप्रकाशभगवन् ते तव कथासुधायाः अमृतवन्मधुरतमायाः कथायाः पानेन इदमत्र बोध्यम्, कथासु सारः हृद्याःस्तुतयः तासु च परमात्मस्वरूपनिर्णायकः प्रशस्ततमः सिद्धान्तः सारः तद्विशिष्टायाः कथायाः सुधावन्माधुर्यं ज्ञेयम् । यथा दुग्धस्य सारं नवनीतं तस्य सारं घृतं तेनैव दुग्धस्य माधुर्यमुपलभ्यते तद्रहितस्य माधुर्याभावमिव स्तुतिसिद्धान्तशून्यायां कथायामपि माधुर्याभाव एवावतिष्ठते । अत एव भगवदनुरागिभिः सारभूतस्तुतिसिद्धान्तानुसन्धानसंयुक्ता एव कथाः श्रद्धया श्रोतव्याः । तथा च भागवती कथासु सर्वत्र सिद्धान्तबोधनपराः स्तुतयो विराजन्ते इति भागवतस्वाध्यायव्रतिनां न तिरोहितमेतत् । यथा मुखद्वारा पीतो रसः मधुर अन्तः स्थाप्यते तथा श्रवणद्वारा पीता अपि कथा सुधा अन्तः स्थापनीया इति पानपदं द्योतयति । तेनान्तःस्थापितेन कथासुधायाः भगवद्भक्तिरवश्यं प्रवृद्धा भवत्येव, बहिः स्थापितेन अर्थात् पानेन भक्तिर्न प्रवृद्धा भवति अपि तु क्षीणा भवतीति सूच्यते । तथा चैकाग्र्येण श्रद्धया च कथासुधाया पानं कर्तव्यम् । येन सान्तः स्थापिता भवेत् इति द्योत्यते अनैकाग्र्येणाऽश्रद्धया च श्रुताः कथासुधा बहिरेव स्थापिता स्यात् नान्त इति । प्रवृद्धभक्त्या विशदाशया ये पापरागादिदोषनिवृत्त्या विशुद्धहृदया भवन्ति । ते वैराग्यं विषयवैतृष्ण्यमेव सारं बलं यस्य तं बोधं जीवात्मपरमात्मज्ञानं प्रतिलभ्य साक्षात्कारपर्यन्तं लब्ध्वा यथा सज्ञादिक्रमेण

अंजसा अनायासेन अकुण्ठधिष्ण्यं कालादिप्रतिघातरहितं अच्युतं विष्णोः परमं पदं अन्वीयुः प्रापुरिति ।

तदेतत् धिषणातिरेकविलसितं प्रबलशृंखलितांघ्रेः उत्प्लवनप्रागल्भ्याभ्यसनतुल्यं इति उपेक्ष्यं विद्वद्भिः॥ अत्र भगवदात्मैक्यज्ञानमिति यदुक्तम्, तस्य कोर्थः किं भगवद्रूपो य आत्मा तस्यैक्यं इति भगवदात्मैक्यज्ञानमित्यस्यार्थः । अथवा भगवत्पदेन षड्गुणैश्वर्ययुक्तो गृह्यते तस्य जीवात्मनश्चैक्यज्ञानमित्यर्थः । अथवा भगवत्पदेन अद्वैत्यभिमतनिर्गुणब्रह्मणो ग्रहणम् । तस्य जीवात्मनश्चैक्यज्ञानं इत्यर्थो गृह्यते । अत्र भगवदात्मैक्यज्ञानमित्यत्र आत्मैक्यज्ञानमित्यस्यापि कोर्थः ? अहं ब्रह्मास्मीति प्रकारेण जीवस्य ब्रह्मणा सह अभेदज्ञानं–उत जीवो मिथ्या ब्रह्मैव सत्यमिति ज्ञानं–अथवा आत्मा एक एवास्तीति ज्ञानं इत्यर्थविवक्षा । न प्रथमः एको देवो देवकीपुत्र एव इति सिद्धान्तस्यास्माभिरप्यङ्गीकारात् । न द्वितीयः भागत्यागलक्षणायाः अनभ्युपगमप्रसङ्गात् । न तृतीयः उपहितानुपहितभेदमपन्हुत्यैवैवं वक्तुं शक्यत्वात् । सत्यमिथ्यावस्तुनोरभेदानुपपत्तेश्च यद्यात्मैक्यज्ञानमित्यत्रोक्तविकल्पेषुप्रथमो विकल्पोभ्युपेयते तर्हि वाक्यैकदेशस्य सार्थकत्वं भवेदपि किन्त्वस्य विकल्पस्य उपपन्नत्वं नास्त्येव, यतः प्रतिबिम्बाभासादिपक्षे सत्यब्रह्माभेदः मिथ्याभूते जीवे कथं ज्ञातुं शक्यते, आग्रहेणज्ञानं तु सत्यमिथ्याविभागोपलब्ध्यन्यथानुपपत्तिपराहतमिति ब्रह्मणोपि मिथ्यात्वसम्पादकतया अद्वैतिनां ताथागतत्वसम्पादकं चेत्यसंभावितमेव ।

यद्युच्येत न वयमनन्यत्वमित्यभेदं ब्रूमः किन्तु भेदं न्यासेधामः इति तदनन्यत्वाधिकरणस्थया भामतीपंक्त्या नास्माभिः भावरूपता अभेदस्योच्यते येनायं दोषः प्रसज्येत किन्त्वभावरूप एवाभेदोऽस्माभिरङ्गीकृतः इति नास्य दोषस्य प्रसक्तिरिति चेत् न भवद्भिः तदनन्यत्वाधिकरणे उपनिषदांव्यासस्यचाशयः उद्भाव्यते बौद्धाशयो वा । यद्युपनिषदां भेदाभावप्रतिपादन आशयो भवेत् तत्त्वमसि योसौ सोहं अहं ब्रह्मास्मीति श्रुतिर्न वदेत् किन्तु त्वं नास्ति ब्रह्मैवास्ति स एवास्ति नाहं–अहं नास्मि ब्रह्मैवास्तीति श्रुतिर्वदेत् किन्त्वेवमुपनिषत्सुश्रुत्यनुपलब्धिरेव उपनिषत्सु भावरूप एव अभेदो निरूपित इति सविशेषं साधयति यदि व्यासचरणानां भेदाभावरूपाऽभेदप्रतिपादनमिष्टं स्यात् तर्हि भवदीयभाष्येपि तयोरनन्यत्वमिति विग्रहोनोपलभ्येत, किन्तु तस्यानन्यत्वमित्येवं विग्रहोपलब्धिः स्यात्, किन्त्वेवमनुपलब्धिरेवास्मदुक्तदोषयोः भवत्पक्षे स्थैर्यं अभिव्यनक्ति। नन्वस्मदीयभाष्योक्तविग्रहप्रदर्शनमात्रेण अयमेव व्यासाशयः भवद्भिः कथं निश्चित इति चेत् व्यासैः कार्यकारणयोरभेद उक्तः कारणमात्रस्यैवास्तितारूपाकारणैकाकिता उक्ता वा यदि कारणास्तित्वप्रदर्शनमात्रं व्यासचरणानामिष्टं स्यात् आरम्भणश्रुतिं भगवान् व्यासः हेतुशरीरे न निवेशयेत् आदिशब्दमपि न वदेत् अत्रादिपदेन भवद्भाष्ये याः श्रुतयः उपन्यस्ताः ता अपि कार्यकारणयोः परस्परमभेदप्रतिपादिका एवोपन्यस्ताः कारणमात्रास्तित्वप्रतिपादिकाः नोपन्यस्ताः अत एवानिच्छयापि तथा विग्रहप्रदर्शनं भवद्भाष्यकाराणां आवश्यकं जातमिति व्यासचरणानां

अस्मिन् सूत्रे भावरूपाऽभेदप्रतिपादन एव आशयोस्तीति निश्चीयते। भावरूपाभेदस्वीकारे असदुक्तदोषस्थैर्यं अस्वीकारे च श्रुत्याशयसूत्राशयानुद्घाटनेन सूत्रार्थवर्णनाभावात् अभाष्यत्वप्रसक्तिरिति सर्वथा दोषपरम्परा भवदीयव्याख्याने आयातीति अत्र आत्मैक्यज्ञानमित्यत्रोक्तप्रथमविकल्पस्य अनुपपन्नत्वं ज्ञेयम्।

यद्युच्येत अवच्छेदपक्षे व्याधसूनुपक्षे च जीवब्रह्माभेदः सुखेन ज्ञातुं शक्य इति न आत्मैक्यज्ञानमित्यत्रोक्तप्रथमविकल्पस्यानुपपन्नत्वमिति चेत् इयमभिन्नतापि जीवस्यब्रह्मांशत्वेन अंशांशिभावप्रयुक्ता तु अवच्छेदपक्ष एव संभाविता, किन्त्ववच्छेदपक्षे अंशत्वमुपाधिकृतमिति स्वाभाविकत्वाभावेन अद्वैतसाक्षात्कारानन्तरं उपाध्यपगमे सति अंशत्वास्फूर्त्या कथं भक्तेः सम्भवः, यतो हि सा परानुरक्तिरिति शाण्डिल्यवचनेन भगवति स्वाधिक्यज्ञानं ईश्वरतयानुसन्धायैव भक्तेः लक्षितत्वात् सर्वथांशत्वास्फूर्तौ भगवति स्वाधिक्यज्ञानस्य सर्वथा असंभवदुक्तिकत्वात् भक्तेरसम्भव एव। व्याधसूनुपक्षस्तु बद्धशुद्धादिव्यवस्थाविप्लावकतया कृत्स्नस्य ब्रह्मणः बद्धत्वाज्ञत्वसम्पादकतया चात्यन्तमेव हेयः। यदि द्वितीयपक्षमङ्गीकृत्य जीवो मिथ्याब्रह्मैव सत्यमित्यैक्यज्ञानं भक्तिप्रयोजकतयोच्यते तर्हि 'अत्रैतावदेव विमृश्यं यदिदं जीवब्रह्मैक्यज्ञानं अथवा जीवब्रह्मभेदज्ञानं वा वस्तुतस्तु एकस्य सत्यत्वमपरस्य मिथ्यात्वप्रदर्शनेनानेन भेद एव साध्यतेति जीवब्रह्मभेदज्ञानमेवैतत्। न च जीवमिथ्यात्वे ज्ञाते ब्रह्मैक्यं ज्ञायत एवेति वाच्यम्। एतादृशं ब्रह्मैक्यं कथं भक्तिकारणं भवतीति चिन्त्यमेव। यतः ब्रह्मनित्यं शुद्धं सत्यं एकमेवेति ज्ञानेपि जीवस्य मिथ्यात्वे ज्ञाते अहं मिथ्या मम भक्तिरपि मिथ्या ममान्तःकरणधर्मत्वात् इति ज्ञानं भक्तिं कथं जनयेत्, भक्त्याविर्भावस्तु जीवाधिकरणक एव वाच्यः यतो जीवस्यैवोपकारकता भक्तेः न ब्रह्मोपकारकता। ब्रह्मणस्तु नित्यशुद्धबुद्धमुक्तस्वभावतया सत्यतया भक्तिफलतया च न भक्तेः प्रयोजनलेशमपि पश्यामः। एतेनतृतीयः पक्षोपिनिरस्तः। तथाहि आत्मैक्यं केन ज्ञातं आत्मना जीवेन वा जीवपक्षेपि उपाधिसम्भिन्नस्यैव जीवत्वात् ज्ञानमुपाध्यंशेन उपहितांशेनवा, न प्रथमः तस्य नित्यशुद्धबुद्धतया स्वप्रकाशतयास्वैक्यस्य सर्वदा ज्ञाततया च ज्ञानप्रयोजनाभावात्। द्वितीयविकल्पेपि नाद्यः जीवत्वसम्पादकोपाधेः ज्ञानजनकत्वस्य अद्वैत्यसम्मतत्वात्। न च संक्षेपशारीरककारमते अन्तःकरणस्यैव जीवत्वसम्पादकोपाधितया स्वीकारात् अन्तःकरणस्यैव ज्ञानजनकत्वात् कथमद्वैत्यसम्मतत्वं उच्यतेति वाच्यम्, तन्मतेपि साक्षात् अन्तःकरणस्य ज्ञानजनकत्वस्यास्वीकारात् अन्यथा वृत्तिस्वीकारवैयर्थ्यापत्तेः। नहि वृत्त्यवच्छिन्नचैतन्यं जीवः। अपितु अन्तः करणप्रतिबिम्बितम्। न द्वितीयः। अनुपपत्तेः स्वाभ्युपेतसिद्धान्तविरोधाच्च। तथाहि उपहितांशेन ज्ञानमिति पक्षेपि प्रतिबिम्बितोपहितांशेन अवच्छिन्नोपहितांशेन वा न प्रथमः। प्रतिबिम्बितोपहितांशस्य स्वयमपि मिथ्यात्वेन तेन ज्ञातं आत्मैक्यमपि मिथ्यैवेति तादृशमिथ्याज्ञानस्य मुक्तिसाधकत्वानुपपत्तेः। न द्वितीयः अवच्छिन्नोपहितांशस्य ज्ञातृत्वस्वीकारे चैतन्यस्य स्वाभ्युपेतनिर्धर्मकत्वसिद्धान्तभङ्ग एव भवतीति नास्य पक्षस्योपपन्नत्वम्।

यत्तु लोकेपि साक्षात्कारात्मकज्ञानस्य माहात्म्यं प्रसिद्धमेतत् तथाहि दूरस्थे पतिपत्नीपुत्रादौ प्रेम्णः प्रकृष्टत्वेपि साक्षात्काराभावेन पूर्णतया नानन्दाभिव्यक्तिरित्याद्युक्तम्। तदपि व्यर्थम्। यतोहि साक्षात्कारस्य सत्वेपि द्विष्टपुत्रादिदर्शने प्रेमानन्दाद्यदर्शनात् साक्षात्कारस्याप्रयोजकत्वमेव। ननु द्वेषोपाधिकोयमानन्दाननुभव इति चेत् अत्रापि स्पर्शालापादिविरहोपाधिक एवायमानन्दाननुभवः दुःखाद्यनुभवश्चेति ज्ञेयम्। द्वेषाद्यभावेपि विरक्तोदासीनपुत्रदर्शने दुःखसम्मिश्रानन्दस्यैव दर्शनात् साक्षात्कारस्याप्रयोजकतैव। यत्तु ज्ञानप्रतिपादकानि वचांसि तिरस्कुर्वन्तीत्युक्तम्, तदपि अबोधोपहतत्वस्य स्वस्मिन् प्रदर्शनम्। नास्माभिः एकस्यापि वचनस्य तिरस्कारः क्रियते अपितु वचनानि व्यवस्थया व्यवस्थाप्यन्त एव। यदपि आत्मैक्यज्ञानभक्त्योः तादात्म्यं साधितं तत्तु स्वपक्षप्रतिकूलमेव। तथाहि भक्तेः स्नेहरूपतायाः स्वयमेव स्वीकारात् स्नेहस्य प्रीणामि अनुरज्यामि इति अनुव्यवसायेन अन्तःकरणधर्मतायाः सिद्धत्वात् अन्तःकरणस्य तत्परिणामभूतधर्मस्यापि मिथ्यात्वेन तत्तादात्म्यापन्नात्मैक्यज्ञानस्यापि मिथ्यात्वापत्तेः आत्मैक्यज्ञानं तु ब्रह्माभिन्नतया सत्यमेव वाच्यम् अन्यथा-अनिर्मोक्षप्रसङ्गः आपतेदिति पुत्रलाभाशयाजारमिलनेन स्वपतिहानिप्रसङ्गः।

यत्तु यत्र च शास्त्रवचने ज्ञानापेक्षया भक्तेः उत्कर्षः प्रतिपादितः तत्र ज्ञानं परोक्षं भक्तिः पराफलात्मिका वेदितव्या। एवं यत्र भक्त्यपेक्षया ज्ञानस्योत्कर्षः प्रतिपादितः तत्र भक्तिः श्रवणादिसाधनरूपा ज्ञानं च तत्फलात्मकमपरोक्षं प्रत्येतव्यम्, अत एव साधनभक्त्या पराभक्तिमयस्य साक्षात्कारात्मकज्ञानस्य समुद्भूतत्वं भक्त्या संजातया भक्त्या इत्याद्युक्तम् तदपि स्वकल्पनयैवोक्तम् न भागवतशास्त्राशयमनुरुध्योक्तम्। तथाहि यत्र यत्र ज्ञानापेक्षया भक्तेः उत्कर्षः प्रतिपादितः एवं च यत्र यत्र भक्त्यपेक्षया ज्ञानस्योत्कर्ष उक्तः तत्र तत्र ज्ञानं परोक्षं भक्तिश्च परा फलात्मिका तथैव भक्तिः साधनरूपा ज्ञानं च अपरोक्षं फलरूपमेव भाव्यमिति नायं नियमः, एवं नियमस्वीकारे तु न ज्ञानं नच वैराग्यं प्रायः इति पद्यीयज्ञानपदे वृत्तिसंकोच एव भवेत्। नन्वयं वृत्तिसंकोचस्त्वावश्यकतया क्रियते अन्यथा परस्परविरुद्धवाक्यानां अपरिहरणीयो विरोधः समुद्भवेत् इति सर्ववाक्यसमन्वयार्थं वृत्तिसंकोचस्त्वङ्गीकार्य एवेति चेत्—डिम्भजनव्यामोहनमात्रमेतत्। अत्रायमाशयः-यदि विवक्षितस्थले वृत्तिसंकोचमन्तरा वाक्यसमन्वयसाधने अन्यमार्गस्यासंभव एव भवेत् भवेत् वृत्तिसंकोच स्वीकारः किन्तु अनेकप्रकारेण वाक्यसमन्वयः सिध्यत्येवेति निरर्थकोयं वृत्तिसंकोचाङ्गीकारः श्रद्धाजडशिष्यवंचनार्थ एव। वाक्यसमन्वयप्रकारवैविध्यं तु श्रीसुबोधिनी श्रीविजयध्वजीय श्रीवीरराघवीय श्रीतोषिण्यादौ द्रष्टव्यम्।

वस्तुतस्तु अत्रेदमेव पराम्रष्टव्यम्, यत् यत्र यत्र शास्त्रे ज्ञानस्योत्कर्षः भक्त्यपेक्षयोच्यते तत्र तत्र ज्ञानमार्गस्योच्यते उत ब्रह्मापरोक्षलाभात्मक ब्रह्मलाभस्य। किंच तत्र अधिकारिभेदादिव्यवस्थास्तित्वसूचनमस्ति नवा। अन्यच्च वैष्णवाचार्यैरपि मार्गयोरु-

भयोः तारतम्यो विमृष्टः अथवा मार्गफलयोः। अत्र वास्तविकतात्वित्थम्-यत्र यत्र भक्त्यपेक्षया ज्ञानोत्कर्षः प्रतिपाद्यते तत्र तत्र मार्गस्य न प्रतिपाद्यते, अपि तु ब्रह्मप्राप्तिसामयिकाऽपरोक्षसाक्षात्कारात्मकज्ञानस्य, तत्तु फलकोटौ निविशतीति तस्योत्कर्षप्रतिपादनमावश्यकमेव। किंच न तदेव परमं फलं तदनन्तरं फलानुभवप्रकारस्तु साकं वाचं स्पृहणीयां वदन्ति इत्यनेनोक्त एव। अत्र रुचिराणि रूपाणि पश्यन्तीति प्रथमं फलं तत्रापि प्रसन्नवक्त्रत्वादिविशिष्टरूपदर्शनं प्रथमफले विशेषः तदनु भगवता सह संलापादिकं द्वितीयतृतीयादिफलं। एतदेव यैर्वा निपीतमनुरक्तकटाक्षमोक्षं इत्यत्रापि भिन्नमुखेनोक्तम्। एवं चात्रेदं सिद्धम्, यत् यत्र यत्र भक्त्यपेक्षया ज्ञानस्योत्कर्षः भक्तिफलत्वेन वा ज्ञानस्य प्रतिपादनं तत्र तत्र ज्ञानशब्देन न ज्ञानमार्गस्य प्रतिपादनं अपितु अपरोक्षसाक्षात्काररूपब्रह्मदर्शनात्मकब्रह्मलाभ एव ज्ञानशब्देनोच्यतेति अस्मदीयविमर्शप्रकारस्यैव निरवद्यता ज्ञेया। ज्ञानपक्षपातिभिस्त्वत्र स्पष्टतयैव वंचनं क्रियते यज्ज्ञानमेव उत्कृष्टं साधनं भक्तित इति, वस्तुतस्तु तन्न साधनं अपितु फलकोटिनिविष्टं तदितिज्ञेयम्॥

यदपि समदर्शिनस्त्वित्यारभ्य तयोरेकत्वमत्यादरेण सांख्ययोगौ पृथक् बालाः द्वयोरप्येक एवार्थ इत्यादिभिः प्रमाणयन्ति इत्युक्तं तदपि वार्तम्। न हि सांख्ययोगाविति वाक्यस्यात्र प्रसरः भिन्नप्रकरणस्थत्वात् सांख्ययोगाविति वाक्यं ज्ञानकर्मणोः फलैक्यं, प्रकारभेदेपि प्राप्त्यैक्यदृष्ट्या समर्थयति इति नात्रास्य वाक्यस्योपयोगः कर्तुं शक्यः। कृत्वा चिन्तया अत्रोपयोगस्वीकारेपि तत् प्रकारभेदेपि प्राप्त्यैक्यदृष्ट्या फलैक्यनिर्णायकमेव न स्वरूपैक्यसाधकं। भवद्भिस्तु स्वरूपैक्यं साध्यतेति नास्योपयोगित्वम्। नचास्यापि स्वरूपैक्यसाधकत्वमेवेति वाच्यम्। यत्सांख्यैः प्राप्यते स्थानं इति उत्तरवाक्येन सुस्पष्टतयास्य वचनस्य फलैक्यसाधकत्वं साध्यतेति अस्मदुक्तमेवोपपन्नम्।

यत्तु द्वयोरेक एवार्थ इति वचनमुदाहृतं तदपि सांख्ययोगाविति वचनवत् प्रकारभेदेपि प्राप्त्यैक्यदृष्ट्या ज्ञानभक्तिमार्गयोः फलैक्यनिर्णायकमेव। तथाहि शास्त्रे अर्थशब्दस्यस्वरूपवाचकत्वं प्रयोजनवाचकत्वं चेत्युभयमपि प्रसिद्धम्। द्वयोरप्येक एवार्थ इत्यत्रोक्तार्थशब्दस्य प्रयोजनवाचकत्वमेव न स्वरूपवाचकत्वं इति तु ते प्राप्नुवन्ति मामेवेति भगवद्गीतावचनेन व्यवस्थाप्यते इति द्वयोरप्येक एवार्थ इत्यत्रोक्तार्थशब्दस्य प्रयोजनवाचकत्वमेवाङ्गीकरणीयं प्रेक्षावद्भिः। तथा च पद्यार्थस्त्वेवमभ्युपेयः यो निर्गुण भक्तिमार्गः यश्च ज्ञानमार्गः द्वयोःएकएवार्थः एकमेव प्रयोजनं फलं वा यद्यपि प्रकारभेदः अस्त्येवात्रापि यः सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः। क्लेशोधिकतरस्तेषां अव्यक्तासक्तचेतसाम्॥ अव्यक्ता हि गतिर्दुःखं देहवद्भिः अवाप्यते। इति सार्धपद्येन गीतायामुक्तः, तथाप्यत्र प्राप्त्यैक्यतया फलैक्यं ते प्राप्नुवन्ति मामेवेत्यत्रोच्यते इति द्वयोरप्येक एवार्थ इति पद्येनापि ज्ञानभक्त्योः स्वरूपैक्यसाधनं पद्याशयानवबोधनिबन्धनमेव। प्रसङ्गवशादन्यदप्युच्यते ते प्राप्नुवन्ति मामेवेति कथनं तु अद्वैतिनां सर्वथा प्रतिकूलं निर्गुणो-

पासकानां सगुणस्वरूपे लयप्रतिपादनात्। अस्मन्मतेतु सर्वथानुकूलं गणितानन्दस्वरूपोपासकानां अगणितानन्दपुरुषोत्तमस्वरूपे यथा नदीनां बह्वोम्बुवेगाः समुद्रमेवाभिविशन्तीति न्यायेन प्रवेशप्रतिपादनात्। ननु ते प्राप्नुवन्तीति वचनं नाद्वैतिमतेविरुद्धम्। अत्र मामित्यनेन अस्मच्छब्दोपलक्षितनिर्गुणचैतन्यस्यैव ग्रहणमिति चेत् हा हन्त दिवान्धो यथा रविकरनिकरप्रकाशितमप्यर्थं न पश्यति तथा कोटिसूर्यसमप्रभपुरुषोत्तमवचनमरीचिनिचयालोकप्रकाशितमप्यर्थं न पश्यसीति पुरुषोत्तमवरणीयताहेतुगुणविशेषविरह एवात्र कारणं नान्यत् पश्यामः। किंच मामित्यनेन निर्गुणनिर्विशेषब्रह्मग्रहणे मय्यावेश्य मनो ये मां इत्यत्रापि मामित्यनेन निर्गुण एव गृह्यताम्, ननु तत्र ग्रहणमसंभावितमिति चेत् अत्राप्यसम्भावितत्वं तुल्यं अन्यथा गीतास्थद्वादशाध्यायीयास्मत्पदे शक्तिद्वयकल्पनयैव निर्वाह इति गौरवदोषाक्रान्तत्वमस्य पक्षस्य तथा चेदं सिद्धम् यत् ज्ञानयोगश्च मन्निष्ठो इति वचनेनापि ज्ञानभक्त्योः स्वरूपैक्यं नेष्यते अपितु पूर्वनिर्दिष्टरीत्या फलैक्यमेव प्रतिपाद्यते तत्तु सर्वथा तव प्रतिकूलमिति नानेन वचनेनापि त्वदीप्सितसिद्धिः। एवंचात्र नशब्दभेदमात्रमङ्गीकृत्य द्वयोरित्युक्तं किन्तु अर्थभेदमनुसृत्यैवोक्तमिति निस्संशयं सिद्ध्यति।

एतावता ग्रन्थभागेन यत्प्रतिपादितं तस्य सर्वस्यापि मूलं तु यमेवेति श्रुतिवचनमेव अतस्तदेवादौ परीक्षणीयं येनोक्तविचारस्य सर्वस्याप्युपपन्नतया दार्ढ्यं भवेत्। अस्य श्रुतिवचनस्य भिन्नभिन्नभाष्येषु पूर्वाचार्यैः पृथक् पृथगर्थप्रतिपादनात् एतत्परीक्षणं परमावश्यकम्। तत्र तावत् ज्ञानमेव मुक्तिसाधनमिति साग्रहं प्रतिपादने बद्धपरिकराणां श्रीमत् भगवत्पादानां भाष्यमादौ परीक्षणीयं प्रधानमल्लनिबर्हणन्यायेन। यतस्त एव हि विशेषतो ज्ञानपक्षपातिनः। तत्र मुण्डकोपनिषद्भाष्ये श्रीभगवत्पादैरियं श्रुत्येवं व्याख्याता= यद्येवं सर्वलाभात्परम आत्मलाभः तल्लाभाय प्रवचनादय उपाया बाहुल्येन कर्तव्या इति प्राप्ते इदमुच्यते। योयमात्मा व्याख्यातो यस्य लाभः परः पुरुषार्थः नासौ वेदशास्त्राध्ययनबाहुल्येन प्रवचनेन लभ्यः। तथा न मेधया ग्रन्थार्थधारणशक्त्या। न बहुना श्रुतेन नापि भूयसा श्रवणेनेत्यर्थः। केन तर्हि लभ्य इत्युच्यते यमेव परमात्मानमेव एष साधको विद्वान् वृणुते प्राप्तुमिच्छति तेन वरणेन एष परमात्मा लभ्यो नान्येन साधनान्तरेण। नित्यलब्धस्वभावत्वात्। तस्यैष आत्मा अविद्यासंछन्नां स्वां परां तनुं स्वात्मतत्वं स्वरूपं विवृणुते प्रकाशयति प्रकाश इव घटादिः विद्यायां सत्यां आविर्भवति॥

कठोपनिषद्भाष्येपि भगवत्पादैः किंचित् शब्दभेदेन इयं श्रुतिरेवमेव व्याख्याता। तथा हि भगवत्पादाः=यद्यपि दुर्विज्ञेयोयमात्मा तथाप्युपायेन सुविज्ञेय एवेत्याह—नायमात्मा प्रवचनेनानेकवेदस्वीकरणेन लभ्यः ज्ञेयः, नापि मेधया ग्रन्थार्थधारणशक्त्या। बहुना श्रुतेन केवलेन। केन तर्हि लभ्य इत्युच्यते यमेव स्वात्मानं एष साधको वृणुते प्रार्थयते तेनैवात्मना वरित्रा स्वयमात्मा लभ्यः ज्ञायत एवमित्येतत् निष्कामस्वात्मानमेव प्रार्थयते आत्मनैवात्मा लभ्यत इत्यर्थः। कथं लभ्यते इत्युच्यते=तस्यात्मकामस्यैष आत्मा विवृणुते प्रकाशयति पारमार्थिकीं स्वां तनुं स्वकीयां स्वयाथात्म्यमित्यर्थः॥

अत्रानन्दगिरेर्लेखोपि परीक्षणीयः। यथाह आनन्दगिरिः वैपरीत्येन वा योजना= आत्मात्वेषप्रकरणी परमात्मा अन्तर्यामिरूपेण आचार्यरूपेण वा व्यवस्थितो यमेव मुमुक्षुं वृणुते भजते अनुगृह्णाति तेनैव परमेश्वरानुगृहीतेनाऽभेदानुसंधानवता लभ्यते इत्यर्थः।

अत्र श्रीरङ्गरामानुजाचार्यास्तु स्वीयभाष्ये एतच्छ्रुत्यर्थकथनावसरे एवं निरूपयन्ति अत्र प्रवचनपदेन प्रवचनसाधनं मननं लक्ष्यते। उत्तरत्र न मेधया न बहुना श्रुतेनेति वक्ष्यमाणध्यानश्रवणसमभिव्याहारबलेन प्रवचनशब्देन मननस्यैव ग्रहीतुमुचितत्वात्। अध्यापनरूपस्य प्रवचनस्य हेतुत्वाप्रसक्तेश्च। एष आत्मायं साधकं प्रार्थयते तेन लभ्यः प्रार्थनीयपुंसा लभ्यः। तत्प्रार्थनीयत्वं च तत्प्रियतमस्यैव पुंसः। प्रियतमत्वं च तत्प्रीतिमत एव। ततश्च भगवद्विषयिणी उपासकस्य प्रीतिः भगवत उपासके प्रीतिमुत्पाद्य तत्प्राप्तिहेतुर्भवति। तस्योपासकस्यैष आत्मा परमात्मा स्वरूपं प्रकाशयति। स्वात्मानं प्रयच्छतीत्यर्थः।

अत्र वेदेशतीर्थास्तु स्वव्याख्याने एवमाहुः—धातुः प्रसादो ज्ञानमोक्षहेतुरित्युक्तमयुक्तं प्रवचनादिनैव ज्ञानमोक्षयोरुपपत्तेः इत्यत आह—नायमिति अयमात्मा भगवान् प्रवचनेन वेदव्याख्यानेनैव लभ्यो ज्ञेयः प्राप्यश्च न मेधयैव लभ्यो न नापि बहुना श्रुतेनैव, किन्तु एष आत्मा प्रसन्नः सन् मदीयोयं वृणुते तेन लभ्यो ज्ञेयः प्राप्यश्च। ततश्चैष आत्मा तस्याधिकारिणः स्वां तनुं स्वस्वरूपं पूर्वमविद्यावृतं विवृणुते प्रकाशयतीत्यर्थः। यद्वा ज्ञानमोक्षहेतुः प्रसादोपि न प्रवचनादिसाध्यः किन्तु भक्त्यैकसाध्य इत्याह—नायमिति। लभ्यः प्रसन्नो भवति। वृणुत इत्यनेन भक्तत्वं सूचितम्। ततश्च तस्याधिकारिण एष आत्मा स्वस्वरूपं तद्योग्यतानुसारेण विवृणुते प्रकाशयतीत्यर्थः॥

एतच्छ्रुत्यर्थनिरूपणावसरे भाष्यप्रकाशे तृतीयाध्याय तृतीयपादे विद्यैव निर्धारणादिति सूत्रे श्रीपुरुषोत्तमचरणैः शांकरव्याख्यानमनूद्य तत्खडंने यदुक्तं तदप्यत्र उपन्यस्यते तथाहि श्रीपुरुषोत्तमचरणाः=तत्रापि तनुपदवैयर्थ्यस्य दुर्वारत्वात् वरणीयवरित्रोरभेदाङ्गीकाराच्च व्याख्येयविरोधः स्फुट एव। किंच गीतायां=एवं सततयुक्ता य= इत्यर्जुनप्रश्ने भगवता मय्यावेश्य मनो ये मां इति उत्तरेण, चतुर्विधा भजन्ते मां=इति उपक्रम्यैव ज्ञानी त्वात्मैव मे मतमितिज्ञानिभक्तस्यैवात्मत्वकथनेन, तपस्विभ्योधिको योगीति सन्दर्भे शुष्कज्ञान्यपेक्षया योगिन उत्कर्षमुक्त्वा श्रद्धावान् भजते यो मां स मे युक्ततमो मतः इति भक्तोत्कर्षकथनेन चास्मदुक्तार्थस्यैवोपोद्बलनाच्च तदसङ्गतम्। अतो विवरणपदस्य प्रकाशनार्थत्वपक्षेपि तनुप्रकाशलिङ्गेन भक्तस्यैव वरणविषयत्वं निश्चीयते इति तेष्वेवस्वीयत्वं सिद्ध्यतीति पूर्वोक्तप्रकारे नकश्चिद्दोषः इति हृदिकृत्योक्तार्थदार्ढ्याय अत एवेति। तथा च यदि लाभपदार्थः प्रकाशनरूपः श्रुत्यभिप्रेतः स्यात् तदास्यामर्चिप्राप्तिपदार्थः कामभोगरूपो नोच्येत, अतो न पूर्वोक्तार्थे विप्रतिपत्तव्यं इत्यर्थः। एतच्छ्रुतावपि विप्रतिपत्तिश्चेत् तदा पूर्वग्रन्थमवलोक्य सा निरसनीया इत्याशयेन आहुः=एतदित्यादि। आनन्दमयाधिकरणे अक्षरादुत्तमस्य रसरूपस्यैव परशब्दार्थत्वेन

निर्णीतत्वात् परमव्योमत्वेन चाक्षरस्य तद्धाम्नो निर्णीतत्वात् वरणेनैव तत्प्राप्तेरपि विचारितत्वात् तथेत्यर्थः।

एतच्छ्रुतिविमर्शावसरे श्रीपुरुषोत्तमचरणैः वरणश्रुतेः अक्षरप्रकरणे पठितत्वात् अक्षरपरत्वमेव युक्तं न तु पुरुषोत्तमपरत्वं इति आशंक्य परिहृतं तदप्यत्रावश्यकमिति लिख्यते। ननु वरणश्रुतिः काठके अन्यत्र धर्मादन्यत्राधर्मात् अन्यत्रास्मात्कृताकृतात्। अन्यत्र भूतात् भव्याच्च यत्तत् पश्यसि तद्वदेति प्रश्ने, सर्वे वेदा यत्पदमामनन्ति इत्यादिना एतद्ध्येवाक्षरं ब्रह्मेति प्रकृत्य पठिता। मुण्डकेपि अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यं इत्यक्षरमेव उपक्रम्य पठिता। एवं सति पुरुषोत्तमप्रसङ्गस्य कुत्राप्यदर्शनात् कथमत्रैवं भगवत्परत्वेन व्याख्यायते इति चेत् अनवधाय वदसि। काठके सर्ववेदवेद्यत्वं परस्यैवोच्यते। तच्च वाच्यवाचकाभेदविवक्षया प्रणवे वक्तुं अक्षरपदेन प्रणवं परामृश्य तत्र ब्रह्मत्वमुपासनासाधनत्वाय विधीयते मन्त्रद्वयेन। ततो न जायते न म्रियतेति मन्त्रद्वयेनोपासकस्वरूपमुक्त्वा अणोरणीयान् महतो महीयानित्यादि मन्त्रत्रयेण तस्य परमात्मनो विरुद्धधर्माश्रयत्वादिकमुक्त्वा तस्य ज्ञानं कथं इत्याकाङ्क्षायां नायमात्मेति पठ्यते। अतो नात्र तद्गन्धः। मुण्डकेपि प्रथमे मुण्डके यत्तदग्राह्यमित्यादिना सर्वकारणत्वेनाक्षरं प्रस्तुतम्। द्वितीयेपि यथा सुदीप्तात् पावकात् विस्फुलिङ्गा इति मन्त्रेण तस्मात् सजातीयविजातीयसृष्टिमुक्त्वा दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः॥ इति मन्त्रे पूर्वोक्तात् अक्षरात् परतः परोऽतिरिक्त उक्तः। तृतीयेपि द्वासुपर्णा इत्यनेन अन्तर्यामितया तमेव परामृश्य ततो जुष्टं यदापश्यत्यन्यमीशमित्यादिना तद्दर्शनफलमुक्त्वा ततो ज्ञानप्रसादेनेत्यनेन निष्कलध्यानात् तद्दर्शनमुक्त्वा ततो ज्ञानप्रसादेपि न स्वसामर्थ्येन पश्यति किन्तु तत्सामर्थ्येनैव पश्यति इत्याशयेनानायमात्मेत्यादिकं पठ्यते, तेनोभयत्रापि पुरुषोत्तम एव प्रकृत इत्यनवद्यम्॥ एतदेव गीतायामुपबृंहितम्, द्वाविमावित्यारभ्य प्रथितः पुरुषोत्तम इत्यन्तेन।

नायमात्मेति श्रुतेरर्थस्तु श्रीमत्प्रभुचरणैः श्रीरघुनाथचरणैः श्रीपुरुषोत्तमचरणैश्च भक्तिहंसे भक्तितरङ्गिण्यां तीर्थे विवेके च इत्थमुक्तः तथाहि श्रीप्रभुचरणाः यमेवैष वृणुते तेन लभ्य इति श्रुतौ सामान्योक्त्या अग्रिमेण च भगवदङ्गीकारमात्रैकलभ्यत्वोक्त्या प्रवचनादिपदानि आत्मीयत्वेन भगवदङ्गीकारातिरिक्तयावत्साधनोपलक्षकाणीति ज्ञायते। तेन जीवकृतिसाधनैः अप्राप्यत्वमुक्तं भवति। पूर्वजीवगतोत्कर्षोप्यप्रयोजक इत्यपि। वरणोक्त्या यथा कन्यास्वाभिमतमेव स्वपतित्वेन वृणुते वरो वा तादृशीमेव कन्यां स्वस्त्रीत्वेन तथा भगवान् स्वदासत्वेन आत्मीयत्वेनाऽङ्गीकरोति इत्युच्यते। तथाच यथा तदनन्तरं नान्यत्र विनियोगः तथा एतस्यापीति ज्ञापितं भवति। पूर्वं केनापि ज्ञातुमशक्यमित्यपि तथाहि श्रीरघुनाथचरणाः तरङ्गिण्यां ऋतं च स्वाध्यायप्रवचने चेत्यनुवाकोक्तमुख्यतपस्त्वस्य स्वाध्यायप्रवचनयोरेव प्रसिद्धेः आदौ तन्निषेधपूर्वकं एव साधन-

लभ्यत्वं निषिध्यते । प्रवचनमध्यापनम् । मेधया धारणशक्त्या । ग्रन्थस्फूर्तिबलेन न बहुपाठेन । वृणुते स्वीकरोति । यं कंचित् । अग्रिमेण तेन लभ्य इति वचनेन । प्रवचनादिपदानि प्राणभृत उपदधाति इति वत् सर्वसाधनोपलक्षणतयोक्तानि ।

श्रीपुरुषोत्तमचरणा अपि विवेके इयं श्रुतिः कठवल्ल्यां मुण्डकोपनिषदि च वर्तते । उभयत्रापि ब्रह्मैवोपक्रान्तमित्ययमित्यनेन परम एवाऽत्मोच्यते । प्रवचनपदं वेदे रूढम् । तदत्र वाच्यतासम्बन्धेन तदुक्तसाधनानि लक्षयति । मेधा धारणावती बुद्धिः । सा च पुरुषनिष्ठस्वाभाविकसाधनानि । श्रुतं चागन्तुकानि । तदेतदभिसन्धायाहुः–प्रवचनादीत्यादि । आत्मीयत्वं जीवसम्बधित्वम् । तस्य विषयितासम्बन्धेनाङ्गीकारेपि सत्वात्तद्वारणाय अङ्गीकारातिरिक्तेति । उपलक्षकाणीति । उपलक्षकं नाम विशेष्यतानवच्छेदकत्वे सति व्यावर्तकम् । यथा जटाभिस्तापस इति लोके जटा तापसत्वोपलक्षिका । वेदे च प्राणभृत उपदधातीति अत्र यथा अयं वै पुरो भुवः तस्य प्राणो भौवायन इत्युपधानकरणभूतैकमन्त्रगतप्राणशब्दभृत्वरूपलिङ्गसादृश्येन तत्सहपठिता मन्त्राः प्राणभृत्वेनोपलक्ष्यन्ते इति तन्मन्त्रेण उपधेया इष्टका अपि तद्वान्नासामुपधानो मन्त्र इति सूत्रेण प्राणभृत्वेन बोधिता इति प्राणभृत्त्वं तत्सहपठितमन्त्रोपलक्षकम् । तथात्र विशेष्यतानवच्छेदकत्वे सति व्यावर्तकेन आत्मीयत्वेन प्रवचनादिपदैः जीवनिष्ठानि त्रिविधानि साधनान्युपलक्ष्यन्ते इति तानि तथा ॥

एवमत्र प्रायः सर्वमतानुसारेण अस्या श्रुतेः व्याख्यानानि निर्दिष्टानि तत्राप्यालोचनं तु विशेषतः शांकरव्याख्यानस्यैवावश्यकम्, यतस्तद्व्याख्यान एव एतच्छ्रुतिघटकयत्तत् इदमेतदादिशब्दानां तनुशब्दस्य च स्वारस्यभङ्गो व्यक्तमवलोक्यते । तथाहि लोके वेदे च परस्परसम्बद्धवाक्यद्वये एकवाक्ये वा यस्येदंशब्देन निर्देशः तस्यैतच्छब्देन निर्देशस्तु उपपन्नतरः इदमेतच्छब्दयोः प्रत्यक्षसन्निकृष्टसन्निकृष्टतरवाचितया समानार्थकत्वात् । यस्मिन् एकवाक्ये परपरसम्बद्धवाक्यद्वये वा यस्येदंशब्देन निर्देशः तस्मिन्नेव वाक्ये तस्य यत्तच्छब्देन निर्देशस्त्वनुपपन्नः । अत्र सर्वैरपि वैष्णवाचार्यैः अयमात्मेत्यत्र अयंपदेन परमात्मा उक्तः तस्यैवैतच्छब्देन पुनरपि उत्तरार्धवाक्ये निर्देशः सर्वेष्वपि वैष्णवव्याख्यानेषु दृश्यते । शांकरव्याख्याने तु अयमात्मेत्यनेन परमात्मानमुक्त्वा सम्बद्धोत्तरार्धवाक्ये तस्यैव परमात्मनः यं परमात्मानं एष साधको वृणुत इति वाक्ये यच्छब्देन निरूपणं दृश्यते, एवमेवं एष इत्यनेन साधकमुक्त्वा तेनेति तच्छब्देन साधकस्य कथनं तस्मिन्नेव वाक्ये दृश्यते । एवमेतद्व्याख्यानेयदेतदादिशब्दानां स्वारस्यापह्नुतिः सुव्यक्तमनुभूयते ।

अत्रेदमाकूतम् । ऋचो अक्षरे परमेव्योमन्=वेदो नारायणः साक्षात्=वेदः शिवः शिवो वेदः=वेदा यथा मूर्तिधरास्त्रिपृष्ठे=न स्त्रियो व्रजसुन्दर्यः पुत्र ताः श्रुतयः किल= मनोरथान्तं श्रुतयो यथा ययुः=तन्मनस्काः तदालापाः तद् विचेष्टाः तदात्मिकाः । तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः ॥ ता नाविदन् मय्यनुषङ्गबद्धधियः यतः स्वमात्मानमदस्तथेदम् । यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे ॥ इत्यादिवचनैः श्रुतिसन्निकृष्टः सन्निकृष्टतरश्च परमात्मैवेति तस्यैव इदमेतच्छब्देन निर्देशः

सूपपन्नः स्वारस्यसंरक्षकश्च । स्पष्टब्रह्मलिङ्गस्यास्य वचनस्य ब्रह्मपरत्वमेव भवितुमर्हतीति अयमात्मेत्यत्र अयमिति पदेन परमात्मैव निरूपितः भगवत्पादीयविवरणेपि, एवमस्मिन् वाक्ये इदंम् शब्देनोक्त्वा परमात्मानं पुनस्तस्य एतच्छब्देन निर्देश एव युक्तः न तु यत्तदादिशब्देन । यत्र तु साधकात्मदृष्ट्या पारोक्ष्यमभिप्रेत्य प्रथमत एव तदादिशब्दै-र्निरूपणं यथा=स आत्मा तत्वमसि इत्यादौ तत्र इदमेतच्छब्दाप्रयोग एवोपलभ्यते । न च यदिदं किंच य एषोन्तर्हृदय आकाश इत्यादि वाक्ये यदेतच्छब्दयोः=एकार्थ-वाचित्वं एकवाक्य एवोलभ्यते तद्वदत्रापि यदेतच्छब्दयोः एकपरमात्मवाचकत्वं भवेदिति वाच्यम्, अगत्या लोकव्यवहारेण च एतादृशवाक्येषु एवं आश्रयणेपि अत्रैवं वक्तुम-शक्यत्वात् । तथाहि यत्र यदिदमेतच्छब्दयो अव्यवधानेन नैकव्यं चवाहेत्यादि अव्ययमात्रव्यवधानेननैकव्यम् तत्रैकार्थपरामर्शः यदेतच्छब्देन लोकव्यवहारेपि दृष्टः उपपन्नश्च तथैव य एषोन्तर्हृदय इत्यादिषु लोकव्यवहारानुरोधेन अन्यगत्यभावेन च एकपरामर्शस्य शक्यवचनत्वेपि यमेवैष इत्यत्र यदेतच्छब्दयोः अव्यवहितनैकव्याभावेन अन्यगतेर्विद्यमानतया च यदेतच्छब्देन एकपरामर्शस्त्वनुपपन्न एव ।

यत्र यत्रोपनिषत्सु यदेतदादिशब्दयो एकार्थनिरूपकतया सामानाधिकरण्यं दृश्यते तत्र सर्वत्रापि इयमेव व्यवस्था यथा=तस्माद्वा एतस्मात् आत्मन आकाशः सम्भूतः=तदेतत् सत्यम्=स वा अयमात्मेत्यादौ । किंच=य एषोन्तर्हृदय=इत्यत्र हृद-यान्तप्रदेशावच्छिन्नस्याकाशस्य प्रतिपादनात् अनेकैरवच्छेदकैरवच्छिन्नानां अनेकत्वात् अनेकेष्ववच्छिन्नेषु कस्यचिदेकस्य निरूपणाय य इत्यनेन निर्देशः सोपपत्तिकः । यमेवैषेत्यत्र शुद्धः परमात्मा निरूप्यते इति अवच्छिन्नात्मप्रतिपादनाभावात् शुद्धात्मनस्त्वद्वैतेऽद्विती-यतयानानेकतेति यच्छब्देन तस्य निरूपणे सर्वथा यच्छब्दस्वारस्यभङ्ग एव भवतीति यच्छब्देन परमात्मनः प्रतिपादनं शांकरव्याख्याने सर्वथा नोपपन्नम् । किंच परमात्मनः सविशेषसधर्मकसाकारानेकरूपाभ्युपगममन्तरा यमितिपदस्य परमात्मपरत्वाङ्गीकारः सर्वथानुपपन्नः, निर्धर्मकनिर्विशेषनिराकारैकाद्वितीयस्य परमात्मनः यमेवेत्यत्र यच्छब्द-प्रतिपाद्यत्वस्वीकारः सर्वथा लोकव्यवहारविरुद्धः स्वारस्यविघातकः चमत्कृतिलेशा-नुत्पादकश्च ॥

अन्यच्चेदमत्र द्रष्टव्यं श्रीशांकरभाष्ये=योय मात्मा व्याख्यातो यस्य लाभः परः पुरुषार्थः इति पंक्तौ यस्य लाभेत्युक्त्या अयमात्मलाभ एव परममुक्तिरूप इतिनिरूप्यते एतत्साधनतया वरणमेव उच्यते साधनान्तरनिरासपूर्वकमनेन श्रुतिवचनेन एतच्छ्रुतौ वरणस्यैव साधनतासाध्यते नान्यस्यैतत्तु श्रीशंकराचार्यैरपि अभ्युपगम्यते=यमेव परमा-त्मानं एव एष विद्वान् वृणुते प्राप्तुमिच्छति तेन वरणेन एष परमात्मा लभ्यो नान्येन साध-नान्तरेण इति पंक्त्या । अत्र सुव्यक्तं भगवत्पादैरपि नान्यः पन्था इति वत् नेतरसाधनैः इयमात्मलाभरूपा मुक्तिः प्राप्यते अपि तु वरणेनैवेति=नान्येन साधनान्तरेणेत्यंशेनोच्यते तथा च तमेवं विद्वान् तमेव विदित्वा=नान्यः पन्था इति वचनानां विरोधः अद्वैतिभाष्य एवस्थेमानमनुभवति । तमेवेत्यादिश्रुतौ ज्ञानस्यैव मुक्तिसाधनताभ्युपेयते अत्र च वरणस्येति

स्पष्टो विरोधः दृश्यते, तद्वरणंभगवत्कर्तृकं जीवकर्तृकं वेत्यन्यत् किन्त्वेतत्तुस्पष्टं यदेतच्छ्रुतिव्याख्याने वरणातिरिक्तयावत्साधननिरासः एतदात्मलाभरूपपरमपुरुषार्थप्राप्तौ श्रीशंकराचार्याणामपि सम्मतः। न च वरणं ज्ञानाभिन्नं येनैवमपि निस्तारो भवेत् किन्तु भिन्नमेव, सुस्पष्टं अस्य वरणस्य परमात्मप्राप्तीच्छारूपताया अत्र श्रीशंकराचार्यैरेव साधनात् अन्यथा वृणुते प्राप्तुमिच्छति इति तस्य विवरणं ते न वदेयुः। नहि ज्ञानं इच्छारूपं कुत्रचिदपि दृष्टम्। ज्ञानं तु वस्तुतन्त्रं नहीच्छा वस्तुतन्त्रा। अन्यच्चात्र वरणं विद्वत्कर्तृकमुक्तं तस्य कोर्थः को वा विद्वान् यत्कर्तृकं वरणमत्रोच्यते किमविद्याप्रतिबिम्बितं चैतन्यं किंवान्तःकरणेप्रतिबिम्बितं चैतन्यं वा अथवा अविद्यावच्छिन्नं चैतन्यं अन्तःकरणावच्छिन्नचैतन्यं वा। अत्र प्रथमद्वितीयपक्षौ सर्वथाऽनुपपन्नौ प्रतिबिम्बितचैतन्यस्य मिथ्यात्वेन च जड़तया जडः सः प्राप्तुमिच्छति इति कथनमसम्भावितमेव। तुष्यत्विति न्यायेन जडेपि इच्छास्वीकारे तु प्रकृतिरपि ईक्षणं करोति इत्युक्तिरप्युपपद्येत। नचेष्टापत्तिरिति वाच्यम्, ईक्षत्यधिकरणभाष्योक्तस्ववचनविरोधात्। नहि तत्र भवद्भाष्येपि प्रकृतेरीक्षणं प्रतिपाद्यते किन्त्वनाद्यविद्यासचिवस्य ब्रह्मण एव ईक्षितृत्वमत्र प्रतिपाद्यते इति सुव्यक्तम्। तथा हि भामत्यां वाचस्पतिमिश्राः=प्रधानस्य साम्यावस्थायामनीक्षितृत्वात् क्षेत्रज्ञानां सत्यपि चैतन्ये सर्गादौ विषयानीक्षणात्, मुख्यसम्भवे चोपचारस्यान्याय्यत्वात् मुमुक्षोश्चायथार्थोपदेशानुपपत्तेः, मुक्तिविरोधित्वात्, तेजःप्रभृतीनां च मुख्यासंभवेनोपचाराश्रयणस्य युक्तिसिद्धत्वात्, संशये च तत्प्रायपाठस्य निश्चायकत्वात्, इह तु मुख्यस्यौत्सर्गिकत्वेन निश्चये सति संशयाभावात्, अन्यथा किरातशतसंकीर्णदेशनिवासिनो ब्राह्मणायनस्यापि किरातत्वापत्तेः, ब्रह्मैव अनाद्यनिर्वचनीया विद्या सचिवं जगदुपादानं शुक्तिरिव समारोपितस्य रजतस्य मरीचयइव जलस्य एकश्चन्द्रमा इव द्वितीयस्य चन्द्रमसः। नत्वचेतनं प्रधानपरमाण्वादि। नच प्रतिबिम्बेश्वरवादिपक्षे प्रतिबिम्बस्य मिथ्यात्वेन मायिकत्वात् अन्ततो गत्वा तदीक्षणं प्रकृतेरेवेति वाच्यम्। भामतीवचनविरोधात्। तथाहि भामती=नहि प्राधानिकानि अन्तर्बहिःकरणानित्रयोदशसत्वगुणप्रधानान्यपि स्वयमेवाचेतनानितद्वृत्तयश्च स्वं वा परं वा वेदितुमुत्सहन्ते। नो खल्वन्धाः सहस्रमपि पान्थाः पन्थानं विन्दन्ति। चक्षुष्मता चैकेनचेद्द्वेद्यते, सएव तर्हि 'मार्गदर्शी स्वतन्त्र कर्ता नेता तेषाम्। किंचजड़स्य मिथ्यात्वेन ज्ञाननिवर्त्यतया ब्रह्मलाभानन्तरं तस्य बाधेन सर्वथा अभाव एवेति फलकाले तस्यास्तित्वमेव नेति कृतहानिः अकृताभ्यागमश्च प्रसज्येत। ज्ञाने सति वरणकर्तुरेवाभावेन फलं केन प्राप्तमित्यपि अनिर्वचनीयमेव भवेत्। फलकाले वरणकर्तुरेवाभावेन श्रुतिनिरूपिता स्ववचननिरूपिताचवरणस्यात्मलाभे साधनतापि वियत्प्रसूनायितैव। तेन वरणेन एष आत्मा लभ्यो नान्येन साधनान्तरेण इति स्वोक्तिरपि जरद्गववाक्यतुल्यैव स्यात्। नच वरणेन अपरोक्षं दर्शनं अपरोक्षज्ञानेन च मुक्तिरिति परम्परैवात्र विवक्षितेति वाच्यम् तथा सति यस्य लाभः परः पुरुषार्थं इति स्ववचनवैयर्थ्यमेव भवेत्। आत्मलाभान्न परं विद्यते इति श्रुतिव्याकोपश्च। तस्मादुक्तोभयपक्षयोः सावद्यत्वमेव धीधनैर्विभावनीयम्॥

यथा प्रथमद्वितीयपक्षयोः सदोषतयाऽयुक्तत्वं तथैव तृतीयतुरीयपक्षावपि दोषसहितावित्यनुपपन्नौ ।

तथाहि अविद्यावच्छिन्नं चैतन्यं अन्तःकरणावच्छिन्नं वा चैतन्यं जीव इत्युभयपक्षेपि ब्रह्मप्राप्तीच्छां कः करोति अविद्या अन्तःकरणं वा तदवच्छिन्नं चैतन्यं वा अविद्या इच्छति चेत् अविद्यैव परमपुरुषार्थाधिकारिणी भवेत् चैतन्यस्येच्छा तु सर्वथा नोपपद्यते सकलधर्मविरहितत्वात् । कृत्वा चिन्तया विशिष्टे इच्छास्तीति स्वीकारेपि विशिष्टः शुद्धान्नातिरिच्यते इतिन्यायेन शुद्ध एव इच्छापर्यवस्येत् किंवा सविशेषणे हि विधिनिषेधाविति-न्यायेन इच्छा अविद्यान्तःकरणपर्यवसायिन्येव भवेत् । इच्छायाः शुद्धे पर्यवसानं तु शुद्धस्य निर्धर्मकत्वादनुपपन्नम् । अविद्यापर्यवसितत्वं तु इच्छाया ईक्षत्यधिकरणस्थस्ववचन-विरोधात् व्यासाशयविरुद्धत्वाच्च सर्वथैवहेयम् । ईक्षत्यधिकरणस्थस्ववचनविरोधस्त्वधस्ता-दुपपादितः । यथा ईक्षणं चेतनधर्मः तथैव इच्छापि यथा ईक्षणंजड़स्यनोपलभ्यते तथैव इच्छापि जडे न कुत्रापि दृष्टा । आग्रहेण स्वीकारोपि अनेकदोषदुष्टः । तथाहि कठोप-निषद्भाष्ये एतच्छ्रुत्यर्थविवरणे श्रीशंकराचार्योक्तिरेवात्रबाधिकातैस्तत्र=तेनैवात्मनावरित्रा स्वयमात्मा लभ्यः अत्र वरित्रा आत्मना लभ्य इत्युक्त्या आत्मन एव वरणकर्तृत्वं उक्तं न अविद्यान्तःकरणयोः । तथा चेसिद्धमेतत् आत्मैवआत्मलाभमिच्छति एवं च सकलधर्मविधुरत्वं चेतनस्येति सिद्धान्तस्य सर्वथैव भङ्गः । स्ववचनविरोधमविगणय्य अविद्या अन्तःकरणं वा इच्छति इति स्वीकारेऽपिअविद्यादिकमेव मोचयेत् इति जीवात्मा नैवमुच्येत । यतोस्मिन् पक्षे वरित्री अविद्यैव भवेत् इति एतच्छ्रुत्यनुसारेण सैवात्मलाभ-मनुभूय मुक्ता भवेत् इति आत्ममुक्तिकथैव विलीयेत । एवं प्रतिबिम्बवादस्वीकारेण अवच्छेदवादस्वीकारेण च यमेवेति श्रुतिघटकतच्छब्दार्थरूपविद्वान् साधक इत्यादि पदयोः निर्वचनं शांकरव्याख्याने न भवतीति सोपपादनमुक्तम् । तस्मात् अस्याः श्रुतेः शांकरंव्याख्यानं सर्वथैव दोषयुक्तं इति सिद्धम् । एवमस्य व्याख्यानस्य सावद्यत्वमवलोक्य आनन्दगिरिणा यमेवेत्यत्र यच्छब्देन साधकात्मैव परामृष्टः एषेत्यनेन च अन्तर्यामी परामृष्टः, तथापि भक्षितेपि लशुने नशान्तो व्याधिरिति न्यायेन प्रतिबिम्बवादे अवच्छेदवादेयानिदूषणान्युक्तानि तानि आनन्दगिरिव्याख्यानेपि तथैव संलग्नानीति यदेतच्छब्दार्थपरिवर्तनमकिंचित्करमेव । यदेतच्छब्देन साधकान्तर्याम्यात्मग्रहणेपि प्रति-बिम्बावच्छेदान्यतरपक्षस्य तेनाप्यभ्युगमात् ।

इति श्रीमदखण्डवरपण्डितप्रसूतचण्डपाषण्डवाग्विखण्डनसुचण्डिमाधरणिमण्डला खण्डलजगद्गुरुश्रीवल्लभाचार्यश्रीमत्प्रभुचरणभृत्यभृत्येन गो. श्रीगोकुलनाथाचार्यात्मजेन अनुकम्पास्वरूप श्रीकुसुमप्रभामातृगर्भसम्भवेन भगवदीयदासदासेन गोस्वामिदीक्षितेन विरचितो ज्ञानभक्तितारतम्यविमर्शस्य प्रथमो भागः परिसमाप्तः ।

सकलान्तरात्मा श्रीकृष्णः प्रसन्नोस्तु ।